शितः . अर्केण कुतो हेतोस्सोध्यापित इत्याह अरुणेन मातृस्व(l.12)स्रेय-स्त्वात्प्रवेशितः अथ······र्था·········धारितां भूमिं भूयो र·········
·········(l.13)[1].

स ॥ सहस्र[पादेन सूर्येण निकामसे]वनोद्धे[तोः पादद्वितये](l.14)न कृतप्रसादो दत्तपादद्वयः . सूर्यस्य सहस्रपादत्वात्पादद्वयदानोक्तिसङ्गतिः . (l.15)एपोरुणः किं नु म्लेच्छक्षोभितं पुष्करं पवित्रीकर्तुमवरूढः ॥

चि ॥ श्रीरामपा(l.16)दसेवया त्यक्तपशुजन्मपाशाविर्कारो जन्मान्तरे शि-क्षितराक्षसवधोयमपरं(l.17)

[Lines 18 to end of page missing](*)

ततो युद्धे मरणेनार्कमण्डलं प्रविश्य किमेप कर्णो भूतलमेति. कर्णः कथ-मियद्दी(l.1)न इत्याह अयोनिजत्वेन समेधिता द्युतिर्यस्य ॥

जग ॥ जगत्प्रदीपादर्कोदी(l.2)श्वरेच्छया प्रदीपितो द्वितीयो जगत्प्रदीपः सूर्यः किमेप भवति. किं वा द्वादशानां(l.3) सूर्याणां तेजसा कृतः किमेप भवति . द्वादशविधराजजैत्र इति हेतुः ॥

इति ॥ (l.4) प्रतापमूलस्थानेन तेजसा हेतुनैवं देवराजेन चार्चितः कृत-कल्पनः त्रिभुवन(l.5)पुण्यराशिः पुरुषोर्कमण्डलान्निर्गतः ॥

इतः प्रभृति स योपि रेवन्तं इत्यन्तं पु(l.6)रुपरूपवर्णनपरं कुलकम् ॥

यथा शुचिस्सिन्धोस्सलिलाद्यथाग्नितः
तथैव पुण्या(l.7)दपि भानुमण्डलात् -
महेश्वरस्यैप तनोस्समुद्गतो
जगद्विषां संहृतये गुहः (l.8)पुनः ॥

---

1 Ms. मलेत्य-त्वयः crossed at the beginning of line. 2 Ms. °नद्दे°.
3 Ms °र्धिका°. 4 Ms °मरप.° 5 Ms. रेषमं°.
6 Ms °रयैन, °प written above °न.

आग्नेयो गाङ्गेयश्च कुमार इत्यागमः . अतः कविरूहति अष्टमूर्त्ति(l 9)-मूर्त्यन्तरात्सूर्यमण्डलाच्छंत्रत्त्यार्थमेष कुमार इवं निर्गत इत्युत्प्रेक्षा . पुरुषो विषयो गु(l 10)हो विषयी . विषयित्वेन विषयस्य सम्भावनार्थं महातेज-स्त्वमनया······स्समानो(l 11)··············· ॥ 15.

स्वभावसि[द्धाभरणादि]‒⏝‒
प्रभावलीलार्थगतावकाशया .
शनैर्ज(l 12)नन्या प्रतिमान्यतावंशा-
न्निपिद्धयेव स्वयमेव नान्वितः ॥

देवानां छाया न भ(l 13)वतीति प्रसिद्धिः तदेव कविरुत्प्रेक्षापूर्वमुप-न्यस्यति . शनैर्जनन्या च्छा(l 14)यया नान्वितः . छायाया अभावे हेतुं संभावयति नैसर्गिकभूषणार्द्दी(l 15)-

[Lines 16 to end of page missing] (**8[4]) .

द्धेति[5] भावः ॥ 16.

पतङ्गवानायुजरोमकोमलै-
र्निकामकाशैरपि कुन्तलोत्करैः .
गुणाननुज्झद्भि(l 1)रिवान्वयाश्रया-
न्विनिर्ममाणो रजनीपराभवम् ॥

पतंगस्य रवेर्वानायुजा येऽश्वास्तद्रोमवत्कोम(l 2)लैरत्यर्थमेचकैः केशै रात्रेरप्यवमानं कुर्वन् . अत उत्प्रेक्ष्यते कारणानुगुणान्गुणानत्यजद्भि(l 3)रि-वेति . तेषां कारणं दिवार्कमण्डलोत्थितः पुरुषः ॥ 17.

किरीटरत्नातपमण्डलच्छला-
द(l 4)वत्सुधांशोरपि सुन्दरं मुखम् . .

1 Is it 'रत्न' ? 2 Ms. इव k under l 10 3 Ms. 'तावंशा'
4 Ms. ४ on margin. 5 Read छाया निषिद्धे'. 6 Ms. 'रसिद्ध'.

अनश्वरीस्तुमिवाहिमत्विषा
सुधांशुजीवातुमिवांशुमर्पितम् ॥(15)

सुधांशोर्जीवातुर्जीवनौषधं सुषुम्णाख्यो रश्मिस्तमिव मौलिस्थरत्नर-
श्मिव्याजाद्दधतं सु(16)त प्राप्तमित्याह सूर्येणेन्दुसुन्दरं सुरमविनाशीक-
र्तुमिव दत्तम् चन्द्र क्षीणस्सन्सुषुम्णप्रवेशेन व(17)र्धते अस्य च मुख
चन्द्र तमेव सुषुम्णं प्रविशतु यथा न जातु क्षीयत इति भाव ॥ 18

न मृष्य(18)ते कस्यचिदेप वक्रता-
मितीव मत्वा परमार्जवस्पृशा ।
कदाचिदिन्दोः कलयेव भास्वता
वि(19)तीर्णया चन्दनलेखयान्वितः ॥

सूर्येण प्रसादीकृतया सरलया चन्द्रकलयेव चन्दन(110)ललाटिकया
युक्त चन्द्रकलायास्सरलत्वकल्पनाया हेतुमाह एप पुरुष कस्यचि(111)-
द्वक्रता कुटिलत्व न सहत इति ॥ 19

तवासुरान्पादतले करोम्यहं
न शुक्रबुद्ध्या व्यवहार्यमन्यथा ।(112)
इतीव मुक्तामणिकुण्डलात्मना
शुभग्रहाभ्यामवलम्बितश्रुतिः ॥

इन्दो कदाचित्क्षीणत्वेन त(113)था बुधस्य च जातुचित्पापसाहच-
र्येण पापात्मकत्वाच्छुभग्रहौ जीवशुक्रावेव ताभ्या मुक्ता(114)कुण्डल-
व्याजाद्धारीकृतकर्ण अत्रोत्प्रेक्ष्यते तवासुरानित्यादि तत्र जीव आह
अहं तव पादतलगानसुरा(115)न्करोमि भवता शुक्रप्रेरणया [न्य]-
था मद्वचनपरित्यागेन न व्यवहर्तव्यम् शुक्र(116)स्यासुरपक्षपातित्वादिति

1 Ms वाजाम 2 Ms वाणतु 3 Ms च न्क 4 Read न्या मुक्ता
मुक्ताकु 5 Ms धाना 6 Ms ते to । le under l 15r

भाव: शुक्र आह तव पादतलेसुरान्करोमि त्वया शुक्रोसुरगुरु(¹ 17)रिति मयि वैरिपक्षसंभावनयान्यथा मद्वचनत्यागेन न व्यवहर्तव्यम् ॥ 20.

महीतले कुत्र(¹ 18)चिदुज्झितासने
सरस्वती श्रीश्च भयाद्भविष्यतः .
इतीव पद्मौ दधदेतयोः कृते
दृशोरच्छला(¹ 19)द ⏑ ⏑ – ⏑ – ⏑ – ॥

........ ...... ..मरे भूमौ भविष्यतः अस्माद्धेतोरिव(¹ 20) 21.

[Lines 21 to end of page missing] (*)

सरोजलक्ष्म्या सितरक्तया रवे-
रयं कुले रत्नमितीव चुम्बितम् ॥

अरुणांशुभिरिव कृतं स्मितकान्तिच्छु(¹ 1)रितमधरं दधत्. अत्रोत्प्रेक्ष्यते अयं पुरुषस्सूर्यवंशे रत्नभूत इत्यतो हेतोरिव पद्मिन्या शुभ्रारुणया लक्ष्म्या चुम्बितं. माता हि(¹ 2) पुत्रं चुम्बति ॥ 22.

विनिर्मितेनेव तमोभिराहृत-
विवस्वतान्धङ्करणैर्जगद्द्रुहाम्.
विराजमानस्सह ते(¹ 3)न वर्मणा
नवाम्बुदेनेव नभोग्रसङ्गिना ॥

जगद्द्रुहां दैत्यानामन्धंकरणैरान्ध्यंकरैः तमोभिः करण(¹ 4)भूतैरादित्येनानीतैः कृतेन कवचेन शोभमानः तत्स्पर्शनाद्धि दैत्यानां तमांसि(¹ 5) दर्पा गलन्ति नभोमात्रसङ्गिना लग्नेन मेघेनेवेति सम्भावनम् ॥ 23.

निशान्निशाकान्तकला(¹ 6)मृणालवैः
कलिन्दकन्याजलरोपशुक्तिषु.

---

1 Ms. 'रिन्छ'. 2 Ms. 'ब' to 'दा' le at the top of page 3 Ms 'तन्पक'. 4 Ms मेघनेवे, 'न' (sic.) le above 'ब'

च्युतैरिवोत्पन्नमिनस्य मण्डले
मनोरमं मौक्तिक(17)दाम धारयन् ॥

यमुनाजलान्निर्गताद्यच्छेपं तदेव शुक्तयस्तासु पतितैः प्रविशश्चन्द्रक(18)-
लामृतकणैरर्कमण्डले उत्पन्नमिव मुक्ताहारं हारिणं धारयन् ॥ 24.

सुरद्विषां विघ्न(19)यितुं मनीषितं
गृहीतमभ्यर्थ्य रवेरिवान्तिकात्.
उदारगारुत्मतनायकच्छला-
त्समुद्वह(1.10)न्नङ्कतले शनैश्चरम् ॥

दीप्तगारुडमध्यमणिव्याजादुत्सङ्गे शनैश्चरमिव दधत्. कुतः प्रा(111)प्त
इत्याह रविसमीपाद्याचित्वा गृहीतमिव. याचने हेतुमाह दैत्यानामभिप्रायं
हन्तुम्(112). शनैश्चरो हि सेवितश्शत्रून्हन्ति ॥ 25.

किरीटकेयूरयुगाङ्गदद्वयी-
वतंसरत्नप्रतिबिम्बितामरः(113).
सुतान्विधातुर्दधदर्यमार्पिता-
न्न वालखिल्यानिव नानुयात्रिकान् ॥

किरीटकेयूरयुगे घा(114)ङ्गदद्वय्यां च यानि वतंसभूतानि रत्नानि
तेषु प्रतिबिम्बिता अमरा यस्य सः अतस्संभाव्यते(115) अनुयात्रिकाननु-
गमनोद्यतान्ब्रह्मात्मजान्वालखिल्यानिव न न दधदपि तु दधानः. वालखि-
(116)ल्याः केन हेतुना तं सेवन्ते इत्याह अर्यम्णा दत्तान्. तथा सूर्यो
विघय(?)····· दिति भावः ॥ 26.

प्रदी[प्यमानो](117) रविमण्डलान्तरा-
दवाप्तकर्मारविधेयकर्मणा.

1 Ms 'संमो'. 2 Ms. वा'

कलिन्दकन्यासलिलानुजन्मना
स्वकीर्त्तिग(1.18)ङ्गासहवासिनासिना ॥

कर्मारे शाणे. प्राप्तशाणघर्षणेनेत्यर्थः यमुनायाः यामुनजन्मनां सोद-
रेण स(1.19)··················गङ्गया सहवासि[ना खड्गे]न भ्राज-
मानः ॥ 27.

न चक्रमेकं भवति मयो(1.20)— — 28.

[ *Lines 21 to end of page missing; last 3 letters of line 21 are* मकरे ](**9)

रीं समर्पिताम् ॥

सूर्येण दत्तां मालां कण्ठे धारयन्. अत्र संभाव्यते हरस्य तृतीयनेत्रं विशतः कामस्य(1.1) हस्तस्थां धनुर्लतां हरस्य दक्षिणनेत्रस्थेनार्केण हरस्य सकाशात्प्राप्तामथ सूर्येण दत्तां ॥ 29.

द्वितीय(1.2)वैवस्वतवद्विरोधिनां
हठात्पदं मूर्ध्नि निधातुमुद्यतः .
विनीलगुल्फाभरणांशुमण्डल-
च्छलेन पादा(1.3) दधदायसाविव

द्वितीयो यम इव शत्रूणां शिरसि बलाचरणं
गु(1.4)ल्फाभरणानामंशुराशिव्याजेन लोहमयौ पादाविव दधत्. यमो हि
*लोहमयपादः* ॥ 30.

स(1.5)पक्षपातं दिनपत्यपत्यमि-
त्यशेषभूमण्डलवन्द्यताकृते .
चकासदङ्गुष्ठनखप्रभामिषा-
त्स्थितेन स(1.6)न्ध्याद्वितयेन पादयोः ॥— — —

1 Ms. कर्मारे. 2 Is it यमुनानुजन्मना? 3 Ms. स्वकीर्त्ति°. 4 Ms. °गिमा°.

अयं दिनपतेरपत्यमित्यतो हेतोम्ममनुजैर्वन्दनीयत्वार्थं मानुरागं(17) स्थितेन सन्ध्याद्वयेन पक्षागच्छोभमानोद्युम्नांशुव्याजात् ॥ 31.

मनोरपि मस्तुतधर्मशासन-
श्शनैश्च(18)गत्यप्यलसः कुपद्धतौ ।
हरीश्वराद्यप्यतिमित्रवत्सलो
यथोचितं दण्डधरो यमादपि ॥

शनेर(19)पि सकाशात्तदत्वधर्मव्यवहारस्तथा कुपद्धतौ कुत्सितमार्गे भूमिमार्गे च शनैरप्यलस. सु(110)ग्रीवादप्यतिशयेन मित्रप्रियः यमादपि यथोचितदण्ड॰. सूर्यापत्या मन्वादिभ्यो भ्रातृभ्योति(111)रेको दर्शितः ॥ 32.

यदर्थ्यते किंचन येन केन चि-
त्तदस्य कर्णादपि दातुमीश्वरः ।
मनो दधानस्तु(112)मनोरुजाक्षयं
विधातुमुज्जागरमश्विनोरपि ॥

येन येनचिद्गुणिना निर्गुणेन वा यत्किंचन दे(113)यमदेयं वा स याच्यते तदप्यर्थिने दातुं कर्णादप्युत्साहवान्. अश्विनोरपि सतोरश्विनाव- ना(114)दत्येत्यर्थ. सुमनसां देवानां साधूनां च रुजाक्षये सावधानं मनो दधत् ॥ 33.

स योपि रैवन्त इ(115)ति प्रसिद्धिमा-
नपत्यरत्नं नलिनीविलासिनः ।
तुरङ्गविद्याचतुरस्ततोप्यसौ
मधुद्विपः पाद(116)समीपमासदत् ॥

विंशत्या कुलकम् ॥

---

1 Ms °वग्द    ‖ Of these 20 verses, beginning with यथा खुसन्ध्यां°, three are incomplete but none is entirely lost.

स योपि रेवन्तनामा प्रसिद्धस्सूर्यस्य श्रेष्ठ. पु(। 17)त्रस्तस्मादप्यश्वविद्याकुशलो विष्णो पादतलं प्रापत् ॥ 34.

स पुष्कराशेषसमुद्रपूरि(। 18)तैः
कुलापगानां पयसा भृतैरपि .
निधानकुम्भैरपि रत्नसंकर-
प्रभाघनैरुत्पलदामहारि(। 19)भिः ॥ 35.

असर्जयद्भूभुजगीविभूषितै-
र्भृशं प्रमोदाश्रुभरेण निर्भरैः[2] .
महात्मनष्षोडशभिर्विलोचनै-
र्महाभिषेकं विधिना सहाच्युतः ॥

युगलकम् ॥ (। 20)

सोच्युतोस्य महात्मनो विधिना ब्रह्मणा सह महाभिषेकं षोडशभिर्नेत्रैरारब्धवान् यत आन(। 21)न्दाश्रुपूरितैर्निधानकुम्भैरिव . तेपि भुजङ्गीधृता भवन्ति . अभिषेके षोडश कुम्भा योज्या इ(। 22)त्याचारः . यद्वा पुष्करादीनां च षोडशसंख्यात्वं कुम्भाना षोडशत्वम् ॥ 36.

प्रणामकाले विधिवासुदेवयोः
करैश्चतुर्भिश्च करद्वयेन च .
धृतोत्तमाङ्गस्स(। 23[4]) षडन्तरानपि
द्विषः प्रतिसेद्धुमिवाक्षयान्नलम् ॥

ब्रह्मण. करद्वयेनाच्युतस्य (।1)करचतुष्टयेन प्रणामावसरे धृतशिरास्सन्कामादीन्षड्ड्ढ्रून्जेतुं बलं प्रा(।2)पत् . हस्तानां षट्त्वादिव प्रतीयमानोत्प्रेक्षा च ॥ 37.

अशेषगात्रोदरगर्भवर्तिनां
त(।3)रङ्गिणीसागरपाथसां लवैः .

---

1 Ms °बन्द° 2 Ms °रे 3 Ms महान° to °रान्तु. lc on margin
4 Ms स्स to °रान् lc under l 23 5 Copyist's remark at top of p 2 of fol 10-श्रमःपत्रे केसरा न्द्रर्म्मिः

निरित्वरैर्नेत्रपथेन शार्ङ्गिण-
स्समस्ततीर्थैरिव सो(1.4)भ्यषिच्यत ॥

नद्यस्सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्च इति दृष्टं(2) हरेस्समस्ताङ्गेषु वर्ति(1.5)-
नीनां नदीनां तथोदरे स्थितानां समुद्राणां जलकणैर्दृङ्मार्गतो हर्षवशान्निर्ग-
च्छद्भिरशेषतीर्थैरि(1.6)व सोभिषिक्तः ॥ 38.

निसर्गपूर्णं कलशं दधद्विधि-
र्हरिश्च शङ्खं तत एव पूरयन्. (1.7)
धराधिपत्ये प्रमदाश्रुणा स्वतः
कृताभिषेकं पुनरभ्यषिञ्चताम् ॥

ब्रह्मा कलशं स्वभावजलपूर्णं दधद्धरिश्च सरित्समुद्रेभ्यश्शङ्खं पूरयन्नु-
भौ ब्रह्माच्युतौ प्रथममानन्दबाष्पेण कृताभि(1)षेकं तं चक्रवर्तित्वे पुनर-
भ्यषिञ्चताम् ॥ (1) 39.

कलौ युगे(1.8) बुद्धतया स्थितो हरि-
र्ददाति यत्कारुणिको जनान्प्रति .
तदापदस्मादनुभावस(1.9)प्तकं
स सप्तलोकीविजयस्य साधनम् ॥

कलिकाले बुद्धरूपो हरिर्दयालुर्जनान्प्रति(1.10)यद्ददाति तदनुभावानां
वक्ष्यमाणानां प्रभावाणां सप्तकं विष्णुसकाशात्प्रापत्(1.11) सप्तभुवनजय-
स्योपायम् ॥ 40.

महाप्रभावानुपलभ्य सप्त ता-
नवाप्तवान्सप्तम(1.12)चक्रवर्तिताम् .

---

1 Ms. °नमा°. 2 Mahabharata, Shanti, 46.63, °मुद्राश्चत्वारस्तस्मै तोयात्मने नमः, see note 2, p.18. 3 Sic. Is it दर्शनात् ? 4 Ms. °गजह°. 5 Ms. °ज° to °शा° lc. on margin. 6 Ms. ६ ७ after °न्. 7 Ms. the whole of the Comm. on this verse is lc. on margin.

यदस्ति किंचित्करणीयमुच्यतां
तदित्यभूत्प्राञ्जलिरग्रतस्तयोः ॥ (I.13)

सप्त महतः प्रभावानवाप्य सप्तमचक्रवर्तिभावं लभमानस्स कर्तव्यमाज्ञाप्य(I.14)तामिति वदंस्तयोः पुरो बद्धाञ्जलिरभूत् ॥ 41.

सुदर्शनस्य प्रतिपादकं प्रति(I.15)
त्रिनेत्रमुत्तानितपूर्वमेकदा .
पुरोस्य विश्वाभयदक्षिणाकृते
प्रसारयामा(I.16)स करं जनार्दनः ॥

सुदर्शनस्य चक्रस्य दातारं त्रिनेत्रं प्रति हरिणा कदाचि(I.17)त्पूर्वमुत्तानितं हस्तं हरिरस्याग्रे जगदभयदक्षिणार्थं प्रसारयामासोत्तानं(I.18) कृतवान् ॥ 42.

ततो नियुक्तस्स यथोदिते विधौ
विधौ च देवे च विधौ तिरोहिते .
यश(I.19)स्यमर्त्यारि— — ⏑ —विधौ
विधौतपाप्मा भरवन्धमग्रहीत् ॥

विधौ ब्रह्मणि वि(I.20**10)धौ विष्णौ च देवेन्तर्भूते सति ताभ्याम्-सुरवधे प्रेरितो विधौतपाप्मानुचितपापस्स पुरुषोसुरप(I.1)द्मानां संकोचकत्वाचन्द्रसमे यशसि भरवन्धमभिनिवेशं गृहीतवान् ॥ 43.

करेण चापस्य ह(I.2)रेर्मनीषया
बलेन मानस्य नयस्य मन्त्रिभिः .
धृतस्य नामाग्निमरणनिर्मितां
स चाद्मानोप(I.3)मिति प्रथां ययौ ॥

---

1 Ms. [illegible]. 2 [illegible] 3 Ms. ह. u. fr. on margin.
4 Ms. [illegible]. 5 Ms. [illegible].

स पुरुषश्चाहमान इति प्रथां प्राप्तः नाम्नामभिमात्तरैः कृतां . केषां ना-(l.4)मानीत्याह् . करेण धृतस्य चापस्य तथा मनीषया धृतस्य हरेस्तथा ब-लेन धृतस्य मानस्य(l.5) तथा मन्त्रिभिर्धृतस्य नयस्य. चापादीनां नामा-द्यक्षरैरिव कृतां चाहमान इति संज्ञां स लब्ध(l.6)वानित्यर्थः ॥ 44.

कदाचिदुत्कण्ठित एष मा स्म गा-
द्विलोकयन्नर्कमितीव विष्णुना[1].
विरिञ्चसा(l.7)मान्यमवेत्य लम्भितं
स्वनाभिपङ्केरुहमातपत्रताम् ॥

एष सूर्यपुत्रः पितर्युत्कण्ठितरसूर्यं(l.8) विलोकयन्सूर्यदर्शनहेतोरसूर्यं मा गादितीव माहात्म्यविषये ब्रह्मणस्सादृश्यमवेत्य विष्णु(l.9)नास्य स्वनाभि-पद्मं छत्रतां नीतम् . छत्रत्वेन नाभिपद्मं हरिरदादित्यर्थः . विलोकयन्निति हे(l.10)तौ शतृप्रत्ययः . अयमर्थः ब्रह्मा मम नाभिपद्माश्रयः अयं च ब्रह्म-णस्सदृशः अस्याप्यहं(l.11) निजपद्मं ददामीति . यद्वा विरिञ्चसामान्यं साधारणमिति नाभिपद्मस्य विशेषणम् . त(l.12)स्यातपत्रतामवेत्य लम्भि-तम् . उपेत्येति पाठ आर्षः ॥ 45.

विवृद्धिमानीय दिनानि कानिचि-
द्गु(l.13)नः पिता ते तनुतां तनोति मे .
यशोनिधे तद्विमृहि त्वमेव मा-
मितीव सेवापरमिन्दुमण्ड(l.14)लम् ॥ 46.

तथा न विश्रान्तिपदं रिपुर्मधो-
रवैति मां मानद पुष्करं यथा .
उपप्लवस्तद्द्रुतमे(l.15)व वार्यता-
मितीव दुग्धार्णवमेव सेवकम् ॥

---

1 Ms. वञ्चि°. 2 Panini 3.2.126. 3 Ms. °च्चासा°. 4 Ms. °स्नि°.

तव पिता सूर्यो मां कंचित्कालं संवर्ध्य मम हानिं करोति(l 16) तस्माद्धेतोर्हे यशस्विस्त्वमेव मां रक्षेतीव सेवायां सक्तं चन्द्रमण्डलम् ॥ तथा ॥ मधो रि(l 17)पुर्विष्णुः पुष्करं यथा विश्रामस्थानं जानाति तथा न मां जानाति तस्माद्धेतोर्म्लेच्छोपद्रवशीघ्रमे(l 18)व वार्यतामित्यतो हेतोस्सेवकं क्षीरसमुद्रमिव ॥ 47.

हिरण्यगर्भस्य कमण्डलूदरे
यमेव सं(l.19)स्थानविशेषमश्नुते .
तमेव धृत्वेव महेश्वरभ्रमा-
त्स्थितं इदं मूर्धनि सौरसैन्धवम् ॥

ब्रह्म(l 20)णः कमण्डलुमध्ये गङ्गाजलं यमेव संनिवेशनं प्राप्नोति तमेव संनिवेशं गृहीत्वायं महे(l 21)श्वर इति भ्रमाच्छिरसि स्थितं गङ्गाप्रवाहमिति रूपकम् . अयमपि हि महान्भूमेरीश्वरः ॥(l.22) 48.

नभस्सरस्सारसयोर्यलद्विपा
हिमाचलस्य स्फटिकाचलस्य च .
ध्रुवं कृतं पक्षतिभिर्नभश्वरै(l.23)-
रमित्रशान्त्यर्थमुपायनीकृतम् ॥

नभ एव सरस्तत्र सारसयोर्हंसयोर्हिमाद्रिकैलाशयोः(l.24*) संबन्धिभिः पक्षतिभिः पक्षैरिन्द्रेण नूनं कृतं सच्छत्रुक्षयार्थं देवैर्ढौकनीकृतम् ॥ 49.

अदभ्रमूर्तिस्स्वयमुष्णवा(l 1)रणं
रवाद्रपाणेस्सहधर्मचारिणी .
समुन्नतिं सूर्यकुले करिष्यतो
रघोरिवास्यापि बभार मूर्धनि ॥

दनै(l 2)रदरया श्रीस्सूर्यकुले माहात्म्यं करिष्यतोस्य रघोरिव शिरसि धृतवती छत्रम् ॥ कुलकम् ॥ 50.

---

1 Ms. ढं. 2 Ms. दे' i.e. above l 1.

अयं यथा(।3) मे तनयस्तथा कृती
न कश्चिदन्योपि कदाचिदप्यभूत् .
इति स्वकं विम्बमिवोष्णरश्मिना
प्रतापवृद्ध्यै कृ(।4)तमानुयात्रिकम् ॥ 51.

अचिन्तयद्यो मनसापि विप्रियं
तमप्युपस्थाय विहन्तुमीश्वरम् .
सुदर्शनाद(।5)प्यधिकप्रभावभा-
गुपास्त चक्रं विजयेषु तं दिशाम् ॥

युगलकम् ॥

अयं मम पुत्रो यथा कृती भ(।6)वति तथा कोपि नान्यो मत्पुत्रोभूदि-त्यतो हेतोस्सूर्येण प्रतापवर्धनार्थमानुयात्रिकं कृतं निजं विम्बमिव तथा(।7) यो मनुष्यो देवो वा चित्तेनाप्यनिष्टं चिन्तयति तमप्येत्य निहन्तुं समर्थं यतो हरिचक्रादपि सप्रभावं चक्रं(।8)•विजयकालेषु वं सिषेवे ॥ 52.

प्रजापतेस्सृष्टिरिवात्तविग्रहा
स्थितिक्रिया मूर्तिमतीव वैष्णवी .
किम(।9)न्यदध्यापितदेहडम्बरा
स्वयं न वा संहृतिशक्तिरैश्वरी ॥ 53.

दधत्यशेषैरपि लक्षणैस्तनू-
मलङ्कृतां र(।10)त्नमरीचिमालिनीम् .
अभून्नदीभर्तुरिवाधिदेवता
पुरोस्य ताम्बूलकरङ्कवाहिनी ॥

मूर्तिमती ब्रह्म(।11)णस्सृष्टिरिव तथा मूर्ता विष्णुसम्बन्धिनी स्थिति-रिव तथा किमन्यद्वर्णयाम इति शेष. अध्यापि(।12)तशिरादितो देहड-

---

1 Ms °सूद° 2 Ms मत्पुनो° lc. under l.6. 3 Ms. यतो lc. under l.7.
4 Ms °जल्का°. 5 Ms. °तार°.

म्वरो मूर्त्तिग्रहणं यया सा हरस्य संहारशक्तिरिव सर्वैरुत्तमस्त्रीलक्षणैर्भूपि-(1.13)तं नानारत्नधारकं शरीरं दधती अत एव रत्नाकरस्याधिदेवतेव ता-म्बूलकरङ्कवाहिनी पुरोस्याभवत् ॥(1.14)                                                    54.

इदं ममोन्मूलयति स्म यश्छला-
दमुष्य वक्त्राणि यथैव सन्ति षट्.
तथैव दन्तान्दनुजक्षयक्षमा-
नहं(1.15) न गृह्णामि किमित्यसूयया ॥                                                    55.

गृहीतवानभ्यधिकं प्रभावतः
षतिर्गणानामिव दन्तपञ्चकम् .
मुखा(1.16)नुरूपीकृतसर्वविग्रह-
स्तमन्वगादाजिषु गन्धसिन्धुरः ॥

युगलकम् ॥

यो मम दन्तं छलादुन्मू(1.17)लितवांस्तस्य कुमारस्य यथा षण्मुखानि सन्ति तथैव षट्संख्यान्दानवदलनदक्षान्दशनान(1.18)हं किं न दधामी-त्यसूयया प्रभाववशाद्दन्तपञ्चकमाददानो मुखसदृशीकृतसमस्तशरीर(1.19)एकदन्त इव गन्धहस्ती समरेषु तमन्वगात् ॥                                                    56.

दिगष्टकं जेतुमशेषमंशुमा-
नवश्यमष्टौ(1.20) बभार वाजिनः .
इमं त्वमुष्मै प्रतिपाद्य सूनवे
ध्रुवं गतस्संप्रति सप्तसप्तिताम् ॥                                                    57.

⏑—⏑—⏑⏑—⏑—⏑—
⏑—⏑—⏑⏑—⏑—⏑— .
[विलङ्घनीयेन]⏑—दिहायसा
स्वकान्तिसर्वस्व[मिवार्पितं दधत्] ॥

---

1 Is it 'नि-व'?    2 Ms. 'रिण'.    3 Ms. दि to 'रा ic. under 125.

एकेनैके(1.21)नैक एको जीयत इति युक्तम् अतोष्टौ दिशो जेतुं सूर्योष्टौ-वाश्वानवहत् अथ पुनस्तेषामश्वानां(1.22) मध्यादेकमश्वं दत्वा सप्ताश्वतां सूर्यो गत इत्येवं कवीनां स्तुतौ योग्यो हयस्तमन्वगात् ॥ मयूरकण्ठ(1.23)समवर्णत्वात्संभाव्यते विलङ्घनीयेनाक्रमणीयेन व्योम्ना दत्तं निजद्युतिसर्वस्वमिव दधत् ॥ 58.

विमुच्य(1.24)[ति दातुममुष्य?] —⏑—
⏑—⏑——⏑दधेः सुता मम .
इतीव बुध्या परिवर्ज्य कौस्तुभं
स्यमन्तकरत्ना(1.25••11)र्ङ्गभृता समर्पितः ॥ 59.

निषीथमार्ताण्डं इति क्षमातले
प्रसिद्धनामा सकलेपि तं मणिः .
मृगा(1.1)ङ्कमौलेस्समसीर्ष्यया धृतः
पितेव चूडाभरणं व्यभूषयत् ॥

अस्य दातुं लक्ष्मीसहोदरः(1.2) मणिः कौस्तुभो मया यद्यपसार्यते तर्हि कौस्तुभसोदरी मह्यं कुप्यतीतीव बुद्ध्या कौस्तुभमदत्वा शार्ङ्गि(1.3)णा स्यमन्तको दत्तः रात्रिरविरिति भूतले प्रसिद्धो मौलिभूषणभूतस्तथा चन्द्रमौलेः स्पर्धया हेतुभूतया(1.4) तेन पिता सूर्य इ[व] धृतः हरश्चन्द्रमौलिः अहं सूर्यमौलिर्भवामीति स्पर्धया धृतः . स्यम(1.5)न्तकस्सुवर्णस्रावी जाम्बवज्जयप्राप्तो मणिः ॥ 60.

पतिर्धनानामजगन्धवासिना
शिवेन दत्तस्त्व इ(1.6)व स्त्रतस्सखा .
उपागतो वा स्वयमेव रक्षितुं
मतार्यमाणो नडकूवरभ्रमात् ॥ 61.

---

1 Ms. एकै°. 2 Ms. °लक्ष्य°. 3 Ms दत्त le. under l.23. 4 Ms. पृ. रा. वि. on margin. 5 Sic, for spelling. cf. Rigveda, X. 72.8-9. 6 Ms. °स्समशीर्षकाव्यत.. 7 Ms. मौ° to °त le. at top of page.

क्रमेण दावाग्निरिवोदपीपद्-
घनं प्रजातापस(1.3)मापनं कुलम् ॥

समस्तां भूमिं निष्कण्टकां कृत्वा भूभृतो राज्ञश्च प्रतापेन धू(1.4)म्रीकृत्वा स धनमसंख्यं मेघं च प्रजातापनिवारकं कुलमजनयत्. अत ए(1.5)व दावाग्निरित्युपमा ॥ 68.

समागतः पुष्करतीर्थयात्रां-
प्रसङ्गतः कञ्चन काल(1.6)मुर्वराम्.
परीक्ष्य सर्वामपि योगिनां गुरु-
र्यथागतं भास्करमण्डलं ययौ ॥(1.7)

त्रिपुष्करे तीर्थे तीर्थयात्रया हेतुभूतया भूमिमागतः प्रसङ्गेन महीं परीक्ष्य परिपा(1.8)ल्य स महायोगी यथागतं सूर्यमण्डलं प्रति गतवान्.योगी च सूर्यमण्डलं(1.9) प्रविशतीत्यर्थच्छाया ॥ 69.

अचाहमानापि रराज मेदिनी
विगाहमाना रुचिरं(1.10) तदन्वयम्.
न वंशगुल्मेन तथा वनस्थली
यथा हि भग्नेन विभाति मौक्तिकैः ॥(1.11)

चाहमानरहितापि भूमिश्शुशुभे रुचिरमधिकं यतः तत्कुलं धारयन्ती. अ(1.12)त्र दृष्टान्तमाह यत्र वंशगुल्मे भग्ने सति मुक्ताफलैर्वनभूमिर्यथा शोभते(1.13) तथा वंशगुल्मेन न शोभते वनभूमिः ॥ 70.

काकुत्स्थमिक्ष्वाकुरघू च यद्वत्-
त्पुराभ(1.14)वत्त्रिप्रवरं रघोः कुलम्.
कलावपि प्राप्य सचाहमानतां
मरुद्वतुर्यप्रव(1.15)रं बभूव तत् ॥

1 Text पुनान्. 2 Is it यातया श°? So comm. 3 Ms. परीक्ष्य twice.
4 Ms. रद°. 5 Ms. काकुल°. 6. Ms. °उर्.

श्रीरामभिक्ष्वाकुं रघुं च धारयद्रघोः कुलं यत्त्रयः प्रवरा (1.16) यस्य त-त्कृतयुगेभूत्तत्कुलं चाहमानभावं प्राप्य प्ररूढचतुर्थप्रवरं कलावभू(1 17)त्. प्रवराणां वैषम्यमेव भवति तत्कुलं तु प्रवरचतुष्टयसहितमभूदिति॥(1 18) 71.

इतः प्रभृति प्रक्षेत्यन्तं कुलकम् ॥

आदित्यरश्मिदुरतिक्रमपारियात्र-
पार्श्वान्तरं(1 19**12)प्रतिदिनाध्वगकीर्तिकायाः.
सप्तार्णवीविषयशाश्वतवाडवाग्नि-
व्यापारपारगमनप्र(1 1)गुणप्रभावाः ॥

प्रवीराः चाहमानस्य कुलमभूषयन्नित्यन्वयः. आदित्यरश्मिभि(1 2)-र्दुरतिक्रमं दुर्लङ्घ्यं यत्पारियात्रकपार्श्वान्तरं तत्र प्रतिदिनं पथिकः कीर्तिः कायो येषा(1 3) ते तथा सप्तसमुद्रविषयश्शाश्वतो नित्यो वाडवाग्नेर्यो व्यापारः ज्वलनं(1 4)तस्य पारगमने पराभवे प्रगुणस्समर्थः प्रतापो येषाम्॥ 72.

दृष्टस्वपूर्वपुरुषो(1 5)दयभूप्रदेश-
सेनारजोभिभवखिन्नसहस्रनेत्राः.
अश्रान्तयज्ञशततर्पितहव्य(1 6)वाह-
शुद्धान्तगीतभुजसाहससंप्रदायाः ॥

स्वपूर्वपुरुषस्यादित्यस्योदयभू(1 7)प्रदेश उदयपर्वतो दृष्टो येन तस्य सेनारजसोभिभवेन खिन्नः खेदितस्सह(1 8)स्रनेत्रो यैस्ते. सहस्रनेत्र इति साकूतम्. तथा अश्रान्तं नित्यं कृत्वा यज्ञशतेषु तर्पि(1 9)तो यो हव्यवाह्नोग्निस्तस्य शुद्धान्तस्स्वाहा तया गीतो भुजसाहससप्रदायो येषां ते॥(1 10) 73.

वैवस्वतायुधभुजङ्गमसह्यमान-
निश्श्रोत्रतानधिगतोग्रचमूनिनादाः.

1 Ms पान° 2 Ms °रम्प्र° 3 Ms १ । त्र् १४ on margin. 4 Copyist's remark तेनत्र ६ छत्रा तरण हि।सतामिद सपूर्ण पत्रम्. 5 Ms. °कद्धु°. 6 Ms °त्यो यो. 7 Ms. °वाहाशु°. 8 Ms. वभूव°. 9 Ms °प्रराया. 10 Ms. °तोश्र°.

स(1.11)न्नाधिपत्यभयदानमयापदान-
वार्ताश्रुतिक्षपितनैर्ऋतचित्तदौस्स्थ्याः ॥(1.12)

वैवस्वतस्य यमस्यायुधैः पाशैर्भुजंगमैस्सह्यमानो यतो निष्कर्णतयान-धिग(1.13)त उग्रसंघर्षशब्दो येषां ते तथा विभीषणस्याभयदानरूपं यदपदा-नं साह(1.14)सं तद्वार्ताश्रवणेन क्षपितं निवारितं चित्तदौस्थ्यं चित्ते क्षोभो यैस्ते. अयमर्थः(1.15) अस्मद्वंश्येन श्रीरामेणास्मै राज्यं दत्तमिति तैर्जि-ष्णुभिर्विभीषणस्याभयं दत्त(1.16)मतस्तत्पक्षभूतस्यापि नैर्ऋतस्याभयं गलि-तमिति··················(1.17)················ ॥ 74.

प्राचेतसप्रियतमासुरतान्तखेद-
निर्भेदवे(1.18)दिकटकद्विपकर्णवात्याः.
पूर्णोदरज्वलननिर्वृतिनिर्विकार-
सारथ्यमुक्त(1.19*)मरुदीरितसाधुवादाः ॥

प्राचेतसीनां प्रियतमानां वरुणस्त्रीनां सुरतान्तखेदस्य(1.1) निर्भेदं विदन्ति कुर्वन्ति. खेदहारिण्य इत्यर्थः. एवंविधाः कटकद्विपानां कर्णवात्या ये(1.2)षाम् तथा यज्ञेषु पूर्णोदरो यो ज्वलनस्तस्य निर्वृतिस्सुखं तया निर्वि-कारो यतस्सा(1.3)रथ्यमुक्तो यो मरुत्तेनेरितस्साधुवादो येषाम् ॥ 75.

कैलासशैलशिखराश्रयकि(1.4)न्नरेन्द्र-
कर्णामृतद्रुतपराक्रमगीतशब्दाः.
ईशानचन्द्रसहवासमहाविदग्ध-
दोर्द(1.5)ण्डकीर्त्यधरितद्युसरित्प्रवाहाः ॥

कैलासनिवासिनां सम्बन्धी कर्णयोस्सुधाप्रवाह(1.6)सदृशः पुरुषकार-

1 Ms. शान्ज°. 2 Ms. °नज°. 3 Ms. दोस्स्थ्य. 4 Ms. °पूर्णाग°.
5 Add नैर्ऋतस्य. 6 Ms. वेपा ते. 7 Is it सिद्धिर्वर्तते? 8 Ms. सप्रवा°.
9 Ms. प्रर्णेत°. 10 Ms. दुखर्द°. 11 Ms. वेदेषन्. 12 Ms. रमारा°. 13 Ms. °प्रवर,

गीतशब्दो येषां ते तथा ईशानचन्द्रेण सहवासे महाविदग्धो दोर्द(1.7)एड-कीर्त्या भुजयशसाधरितो जितो गङ्गौघो यैस्ते ॥ 76.

सेनाहयोद्गमितधूलिल(1 8)घूभवन्भू-
धृत्यल्पयत्नफणिशायितवासुदेवाः .
लक्ष्मीमुखोच्चरणलग्न(1 9)सुधासधर्म-
माधुर्यकीर्तिसुखितीकृतसप्तलोकाः ॥

एवमष्टदिक्पालप(1.10)राजयध्वननमुक्त्वा हरिसेवामाह सेनाश्वैरुत्था-पिता या धूलिस्तया लघूभ(1 11)वन्ती या भूस्तस्या धृत्यर्थं धारणार्थम-ल्पयत्ने फणिनि शेषे शायितो वासुदेवो यैस्ते(1 12) तथा अत एव लक्ष्म्या मुखोच्चरणेनेव लग्नं सुधासधर्मामृतसमं माधुर्यं यस्याः(1 13) तया कीर्त्या सुखीकृतास्सप्त लोका यैस्ते ॥ 77.

ब्रह्मारविन्दमकरन्दकणान्तरङ्ग(1 14)-
तौरङ्गधूलिविरसीकृतदिव्यभृङ्गाः .
श्रीचाहमानकुलमुज्ज्वलयांबभूवु-
र्दोर्म(1 15)एडनाभरणभूवलयाः प्रवीराः ॥

ब्रह्मकमलव्यापिवाजिरजोभिर(1 16)कालिकुलाः तथा दोर्मण्डलस्या-भरणं भूवलयो येषां ते ॥ 78.

रिक्थक्रमादुप(1.17)[नतं] नलिनीभुजङ्गा-
दारभ्य यद्वसु ददुरशरणागतेभ्यः .
वाणिज्यवर्तितमिवानुदि(1 18)नं तदेषां
प्रापोत्तरोत्तरविशिष्टदशामवेशम् ॥

---

1 Ms. दार्दण्ड. 2 Ms °वन्भू° 3 Ms. °देवः. 4 Ms. °च्चरण°.
5 Ms °स्तया crossed. 6 Ms. प्रापोत्तुरोत्त°.

सूर्यजावंरिक्थक्रमादुपनतं प्रा[1 19**13]प्तं वसु तेजो धनं च ते शर-णागतेभ्यो यद्ददुस्तद्वाणिज्येन व्यवहारेण वर्धितमिव तद्वसु उत्तरो[1 1]त्तरं विशिष्टदशाया अनुप्रवेशं प्रापत् ॥ 79.

वास्तोष्पतेस्समरपर्वसहायतार्थ-
मायासितैस्स[1 2]ततमूर्ध्वगतागताभ्याम् .
मेतमभोरसुशकैरपि नेतुमुर्व्या-
स्तैस्स्वेच्छयैव विदधे त्रिदिवे निवासः ॥[1 3]

वास्तोष्पतेरिन्द्रस्य सङ्ग्रामेषु साहायकार्थमूर्ध्वगतेनाकाशगमनेन तथा आगतेन आकाशाद्भूमावं[1.4]वरोहणेन च नित्यं खिन्नैः तथा यमस्यापि भुमे-स्सकाशान्नेतुमशक्यैस्तैस्स्वेच्छयैव स्वयमेव स्वर्गे निवा[1 5]सः कृतः ॥ 80.

अष्टासु दिवपतिपुरेषु यथेष्टमेषां
रक्षःक्षयोपकृतये कृतिनां स्थितानाम् .
भूः स्तम्भि[1 6]ताष्टगिरिमण्डपदिग्द्विपेन्द्र-
स्तम्भाष्टकेन समपद्यत राजधानी ॥

अष्टसु लोकपालनगरेषु[1.7] रक्षसां विनाशेनोपकारार्थं स्वेच्छया रा-क्षसविनाशार्थं स्थितानामेषां चाहमानवंश्यानां राज्ञां भूमिः राज[1 8]धानी नगरी संपन्ना स्तम्भितान्यष्ट गिरय एव मण्डपानि येन तद्दिग्द्विपेन्द्राणा-मेव स्तम्भानामष्टं[1 9]कं यस्याः. राजधान्याश्च मण्डपधारणार्थं स्तम्भा अष्टौ भवन्ति ॥ 81.

वंशे तेषामशेषप्रथमनृपभुजां[1.10] कीर्तिसम्पद्धलाका-
मेमारम्भानुकूलच्छविसदसिपटाम्भोदविश्रान्तिशैलः .

---

1 Ms. ॰संग्रर्ष॰. 2 Ms has ग. ि १४ on margin. 3 Ms. ॰सुगतैः॰.
4 Ms. ॰रि॰॰. 5 Ms. ॰न सो॰. 6 Ms. ॰स्तैस्स्तै॰ 7 Is it स्तौ ?
8 Ms. रक्ष॰. 9 Ms. ॰स्च॰. 10 Ms. रक्ष॰. 11 Ms.॰नो॰ to ॰न॰ lc. on margin.
12 Ms. ॰र॰. 13 Ms. ॰च्छत्र॰. 14 Ms.॰भुजा॰, Is it ॰ि॰भुजां ? 15 Ms. ॰स्तैस्स॰.

कैलासोत्सङ्गस(1.11)ङ्गीतरुसभिकशिवादिष्टगन्धर्वरामा-
गातव्योद्दामकर्मा समजनि वसुधावासवो वासुदेवः ॥(1.12)

तेषां कुले वासुदेवनामा राजा जातः . समस्तानामादिराजानां वा की-
र्तिसंपत्तेस्य वलाका(1.13) तस्याः प्रेमारम्भे सन्साधुर्योसिपटस्स एवाम्भोद्-
स्तस्य विश्रान्त्यर्थं शैलः पूर्वेषां कीर्तिवर्धक(1.14) इत्यर्थः [तथा च] कैला-
सोत्सङ्गे सभिकेन शिवेनादिष्टाभिर्गन्धर्वरामाभिर्गातव्यान्युद्दामक(1.15)र्माणि
साहसानि यस्येति भद्रम् ॥ 82.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो वि(1.16)वरणेन सुबोधमाधात् .
सर्गे द्वितीयमशनैरिह जोनराजः
पृथ्वीमहेन्द्रविजयाभिधका(1.17)व्यराजे ॥

पृथ्वीराजविजयविवरणे द्वितीयस्सर्गः ॥

---

1 Ms. 'तस'. 2 Ms. 'स्माधु'. 3 Ms. 'न्यान्तु'. 4 Ms. 'राजनिवरणे.

## [ तृतीयः सर्गः ]

समभूय[दा स खलु दा](।.18)ननिधि-
र्ववृषुस्तदा सुमनसो जलदाः .
परिकम्पतां यशसि हानिभया-
त्सुरशाखिनां स्वय(।.19)मिव स्खलिताः ॥

यदा वासुदेवो जातस्तदा मेघाः कल्पवृक्षाणां पुष्पाणि ववृषुः . अत्र सम्भाव्यते य(।.20)तो दानेन निधिरतो यशोविषये हानिभयात्कम्पमानानां कल्पवृक्षाणां स्वयं पतितानीव(।.21) . कल्पवृक्षेभ्योप्यधिकं दातेत्यर्थः ॥ 1.

ननृतुर्दिनं सकलमप्सरसः
परिदध्वनुर्विजयदु(।.22)न्दुभयः .
प्रमदं दधुर्यममृतोद्धरणा-
त्पुनरेव तं सुमनसोन्वभवन् ॥

अप्सरसो ननृतुः [पट](।.23*)हा दध्वनुः . सकलं दिनमित्यनेनोभयोर्वाक्ययोस्संबंधः . अमृतलाभेन देवा यं हर्षं प्रापुस्तज्जन्मना(।.1) पुनरेव प्रापुः ॥ 2.

द्युनदीहृतैः कनकतामरसै-
र्मरुतो वबुर्विरचिताभरणाः .
गगनात्मना शशिशिरो(।.2)मणिना
प्रकटीकृता कनकवृष्टिरिव ॥

गङ्गाहेमपद्मैः कृतभूषणा वायवो ववुः अतस्सम्भाव्यते(।.3) आकाशरूपेण शशिशेखरेण सुवर्णवृष्टिरिव मुक्ता ॥ 3.

---

1 Ms °वम्भिर्म 2 Ms क° to °र्मा lc. under 1 19. 3 Ms. °स्वानि.
4 Ms °हट°. 5 Ms स्वर°.

दिवमुच्चकैरभृत तस्य यशो
जल(l 4)दैर्विना जलकणैः पतितम् .
परिपीडितादमृतदीधितितो
विनिरित्वरैरिव सुधापृषतैः ॥

तस्य(l 5) यशो द्यामपूरयत् मेघैर्विना जलकणैः पतितम् यद्यशसा पीडिताचन्द्रान्निर्गच्छद्भिरमृतकणै(l 6)रिव . इत्वरैरिति सृजीन्नशां क्वरप् ॥ 4.

सवितुः कुले कति न भूपतयो
भुजशालिनः समभवन्नपरे .
स(l 7) पुनर्यथा व्यवजहार तथा
न भगीरथो न सगरो न रघुः ॥

सूर्यस्य कुले परे कति न राजानो भुजाभ्या शो(l 8)भमानाः प्रागूजाता. स वासुदेवस्तु यथा व्यवहारमकरोन्न तथा भगीरथादय. ॥ 5.

न स पर्वतो न त(l 9)दरण्यमभू-
न्नगरी न सा मरुमही न च सा .
स विनिर्ममे न खलु यत्र नृप-
स्सरसीः प्रपासुरगृ(l 10)हाणि मठान् ॥

स राजा सरस्यादीन्यत्र नाकरोत्ते पर्वतादयो नाभवन् . सर्वेषु पर्वतादिषु सर(l 11)स्यादीन्कृतवानित्यर्थ. ॥ 6.

न शिखण्डिनो जलधरं प्रथमं
न चकोरकाश्शुचिनिशाशशिनम् .
न पिका(l 12)स्तथा तरुणमाम्रवनं
जहृपुः प्रजास्तमवलोक्य यथा ॥

---

1 Sic. cf Pāṇini 3 2 163 इण्नशजिसर्तिभ्य क्वरप् Katantra 4 4 48 सृजीण्नशां क्वरप्. 2 Ms °त° lc under l 11 3 Read °वण ( Pāṇini, 8 4 5. )

यथा तं दृष्ट्वा जनास्तुतुषुस्तथा न म(I.13)यूराद्यो मेघादीन्दृष्ट्वा तुष्यन्ति. मेघादिभिरिव मयूराद्यस्तेन प्रजा दत्तवृत्तय इत्यर्थ. ॥(I 14) 7.

न हिमाद्रिणा मलयजेन तथा
शिशिराभवच्चिरमनेन यथा .
न सुमेरुणा न मणिभूमिभृ(I 15)ता
वसुमत्यपि क्षितिरनेन यथा ॥

यथानेन राज्ञा हततापा भूरभून्न तथा हिमाचलचन्द(I 16)नाभ्याम् . यथामुना भूर्धनवत्यभून्न तथा सुमेरुरोह[णाभ्याम्] ॥ 8.

[कमलालया] ‿ ‿ पती क(I 17)[मला]
[प्रविहाय] यागतवती नृपतीन् .
कमलोपमादपि तदङ्घ्रियुगा-
त्प्रणिपत्य तां पुनरवापु(I 18)रमी ॥

या लक्ष्मी राज्ञस्त्यक्त्वागतवती तामभी ऋपि राजानस्तत्पादपद्मद्वयं प्रणम्य ततः प्रापु . अ(I 19)त एव कमलालयेति विशेषणमर्थवत् . तत्सेवकानामेव राज्ञा श्रीरासीन्नान्येषामिति भावः ॥(I 20) 9.

मखभूमिगैरशतमखप्रमुखै-
रुरुदन्यतो दिगधिपप्रमदाः .
मखधूम्यया निरपवादमतः(I 21)
परिचक्रमे हि ततदिक्ककुभा ॥

अस्य यज्ञगतैरिन्द्रादिभिर्हतुभिस्तद्भार्या अरुदन्नुदन्तीति य(I 22)ज्ञावभिति शेष. अतस्तन्मखधूमजालेन न्काशितादिगन्तेन निरपवादं कृत्वा भ्रान्तम् . अयमर्थ (I 2 ) मख[धूमेनैव] लोकपालभार्या बाष्पनिर्गलनमभू[त्]

---

1 Ms. [illegible] 2 Ms. [illegible] 3 Ms. [illegible] 4 Ms. [illegible] under l. 18
5 Ms. [illegible] 6 Ms. [illegible]

लोकास्त्वजानन् चिरं पतिप्रवासो वाष्प(1.24**14)हेतुरिति न तु स तासाम-भूत् तद्यज्ञेषु इन्द्रादीनां पोपलाभात् अतो यज्ञधूमेन दूषणं न प्राप्तम्॥(1.1) 10.

सुरसद्मनामविरतापचितौ
द्रुममस्तके न कुसुमं ददृशे .
अपरागिणं विदधिरे पवनं
नभसा गतं क्वचन नोपवनम् .

अपरागवानपि वहन्नशनैः
पवनोभवत्क(1.2)चन नोपवने ॥

देवानां नित्यपूजायां सत्यां तरुविटपेषु पुष्पं न दृष्टम् ततो हेतोः का-प्युद्याने जना वायुम(1.3)परागिणं सदोषं न विदधुः . परागाभावेप्यपरा-गिणं न विदधुरिति विभावना . क्वचित्

अपरागवान(1.4)पि वहन्नशनैः पवनोभवत्कचन नोपवने

इति पाठः ॥ 11.

चरणैस्त्रिभिस्त्रुटितसंघटितै-
र्व्यहरत्सु(1.5)खं स्मरहरस्य वृषः .
पदमुद्रिता नियतमस्य सदा
न हिरण्मयी न समपादि मही ॥

स्मरहरस्य(1.6) वृषो धर्म्मसुखेन व्यहरत् . अत्र हेतुः त्रिभिः पादैः पूर्वं विच्छिन्नैरथ संघटितैश्चतुष्पाद् धर्मोभूदित्य(1.7)र्थः नूनमस्य वृषस्य चतुर्भिः पादैः कृतमुद्रत्वाद्भूस्सुवर्णमयी संपन्ना . खनिस्थानेषु भूस्सुवर्णमजी(1.8)ज-नदित्यर्थः . हरवृषो यत्र संचरति तत्र जातरूपं जायत इत्यागमः ॥ 12.

---

1 Ms. पृ. रा. वि. १६ vertically on margin. 2 Ms. अप° to °वनम्, lc. on margin; this reading is commented upon, and the next one, though in Ms, is mentioned by comm. as *var. lect.* 3 Ms °गिणा. 4 Ms. °देपू°. 5 Ms. °रत°.

चक्तुमशक्यं दार्ढ्यगुणं भूर्लेभे मूषका भू(1.5)मिं न खानितवन्तः अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ 19.

शुकवाहने सततत्तृप्तिमये(1.6)
न दधुश्शुकाः क्वचन शालिभयम्.
क्रतुधूमतो दिशि दिशि प्रसृता-
दुपलेभिरे न विषयं शलभाः ॥(1.7)

शुका वह्निवाहा इत्यागमः. शुकवाहनेनले नित्यतृप्ते इवं शुकाश्शालीनां भयं न दत्तवन्तः. तेषां पावकतृप्तौ(1.8) सत्यां तृप्तत्वात्. सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिवं शलभा आश्रयं न लब्धवन्तः ॥ 20.

न निवेशितैर्गि(1.9)रिगुहासु तथा
न तथा पुरं पितृपतेः प्रहितैः.
चरणाग्रगैर्नृपतिभिर्नृपति-
स्स यथा प्रजास्सुख(1.10)वतीरकरोत् ॥

प्रणमितै राजभिस्स राजा प्रजास्सुखिता यथाकरोत्तथाद्रिगुहासु प्रवेशितैः(1.11) तैर्नाकरोत्तथा न च यमपुरं विसृष्टै राजभिरकरोत्. पलायितानां पुनरुदयाशङ्कया मारितानां(1.12) ये मुक्तास्तेषामुदयाशङ्कयेति भावः॥ 21.

उपयोगवान्यदि रणार्थमभू-
त्स्वयमेव तन्मखमहीष्व(1.13)वसत्.
भुजयोर्बलादभयदानपतिं
दनुजागमे तमनयन्मघवा ॥

इन्द्रो वासुदेवस्य रणार्थमुपयोगी(1.14) यद्यासीत्तदा इन्द्रस्तदीययज्ञ-

---

1 Ms. °भिभ्रे. 2 Ms. °ष lc under 1.7. 3 Ms. °षु lc. under 1. [illegible]
4 Ms. °ग्रस्

देवगृहकृते पर्वताना शिला खण्डिता समिदर्थे च वृ(।1०)त्ता दारिता चित्रार्थ गैरिकादय उद्धृतास्ततस्सर्वे पर्वता क्षितिमल्पप्रमाणत्व प्रापु ॥ 16.

मुहुरीत(।20)यः प्रविविशुर्न भुवं
भुवनान्तरे कचिदिवात्तपदाः
यदि वा क ता विरचयन्तु पद
परिपूरितास्सुकृतिभि(।21)र्हि दिशः ॥

ईतयोतिवृष्ट्याद्यो भुवन न प्राविशन् अतस्सभाव्यते काप्यन्यस्मिन्भुवने कृतास्पदा अथ(।22) वा नैतत् कस्मिन्भुवने ईतय पद कुर्वन्तु हियस्मादर्थे तदीयाभिस्सुकृतिभिस्शोभनै कर्मभिर्दि[श पूरि](।-3)ता ॥(*) 17.

अतिवृष्टयो ववृधिरे सजलै-
र्नयनैः पर रिपुकुरङ्गदृशाम् -
अनवग्रह खमपि सत्पुरुपाः
प्रतिपेदि(।1)रे सततभाग्यमयाः ॥

रिपुस्त्रीणा सवाष्पैर्नेत्रैरतिवृष्टय पुष्टा नित्यभाग्यमयास्सत्पुरुपाः खमाकाशम(।2)नवग्रहमवृष्टिप्रतिबन्ध प्रतिपन्ना अविद्यमानो नवो ग्रहो नैयत्येन विसर्गो यत्र तत्ख सवित्स्वभाव प्रतिपन्ना (।3) नवग्रहरहित खमिति विरोध ॥ 18.

क्षितिरग्रहीत्कमपि दार्ढ्यगुण
कचिदाखवो न खलु चक्नुरमूम् (14)
अत एव ता परमनिर्विवरा
विपदा गणा न परितस्तरिरे ॥

---

1 Ms च le under 1 20 2 Ms न le under 1 21 3 Ms या पुद्य (!) 4 Ms स्सु

वक्तुमशक्यं दार्ढ्यगुणं भूर्लेभे मूषका भू(15)मिं न खनितवन्तः अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ 19.

शुकवाहने सतततृप्तिमये(16)
न दधुरशुकाः क्वचन शालिभयम् .
क्रतुधूमतो दिशि दिशि प्रसृता-
नुपलेभिरे न विषयं शलभाः ॥(17)

शुका वह्निवाहा इत्यागमः . शुकवाहनेनले नित्यतृप्ते इवं शुकाश्शालीनां भयं न दत्तवन्तः . तेषां पावकतृप्तौ(18) सत्यां तृप्तत्वात् . सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिवं शलभा आश्रयं न लब्धवन्तः ॥ 20.

न निवेशितैर्गि(19)रिगुहासु तथा
न तथा पुरं पितृपतेः प्रहितैः .
चरणाग्रगैर्नृपतिभिर्नृपति-
स्स यथा प्रजास्सुख(1.10)वतीरकरोत् ॥

प्रणमितै राजभिस्स राजा प्रजास्सुखिता यथाकरोत्तथाद्रिगुहासु प्रवेशितैः(1.11) तैर्नाकरोत्तथा न च यमपुरं विसृष्टै राजभिरकरोत् . पलायितानां पुनरुदयाशङ्कया मारितानां(1.12) ये मुक्तास्तेषामुदयाशङ्कयेति भावः ॥ 21.

उपयोगवान्यदि रणार्थमभू-
त्स्वयमेव तन्मखमहीष्व(1.13)वसत् .
भुजयोर्बलादभयदानपतिं
दनुजागमं तमनयन्मघवा ॥

इन्द्रो वासुदेवस्य रणार्थमुपयोगी(1.14) यद्यासीत्तदा इन्द्रस्तदीययज्ञ-

1 Ms. °निवे°. 2 Ms. इव lc. under l. 7. 3 Ms. °ति lc. under l. 8.
4 Ms. °प्रव

भूमिपु स्वयमेवावसन् दानवयुद्धागमे तमिन्द्रो भुज(l 15)रतोनाभयदाता-रमनयत ॥ 22

व्यसनैरसावतितरा मलिनै-
रपि सप्तभिस्स्वयमधो विहितैः (l 16)
⏑ ⏑ – – ⏑ –स[क]लादिग्विजय
[तु]रगैरिव ⏑ भल – ⏑ ⏑ मान् ॥

.. [स]प्तभि (l 17) 23.

[Lines 18, 19 missing]

त्र ⏑ –नेनं सा वसुमती विदधे ॥

स राजा भुजबलेन यद्भूमिं धृतवास्ततो हे[तो] . (l 20)
. सत्यार्थोभूत् क्षितिं बिभ्रतीति व्युत्पत्तिर्भूपाभूत् भूर्वसुधा सत्यार्थतामधात् यतोनेन राज्ञा भूर्वे(l 21)सुन्धरा वसुमती सर्वजास्सधना च कृता स राजैव भूमेर्वसुभूत आसीदित्यर्थं ॥ 24.

नृहरिस्स्वयं(l 22) [स वसुधा यदधा-
दजहुर्म]दं तदिति दिक्करिण
अनहकृतिं [फणि]पतिं व्यदधा-
त्कलिपन्नगे(l 23) ⏑ ⏑ ⏑ – ⏑ ⏑ – ॥

[नराणा]मध्ये हरिस्सिहो ना चासौ हरिस्तरुणसिंहश्च स भूमिं यद-धात्त(l 24) मुद्वहनाधिकारहरणादिति भाव सिंहे च सति गजा मद त्य(l 25**15)जन्ति स भूमिं यदधात्तत एवं शेषमनहङ्कृति निरहङ्कारमकरोत् कलिसर्पे गरुत्मता(l 1) राजा यदि वहत् भुवो दुरित-

---

1 Ms नन Is it तन्नन ? 2 Ms त्रिप्र 3 Ms जाह 4 Ms नहुकृति. 5 Ms मर्ते 6 Is it द्विजपातवर्हत ? 7 Ms has पृ वि १७ vertically on margin 8 Ms स to व crossed 9 Ms निहङ्का 10 Is it हहदमु or वह धु ?

भारं यन्न्यवर्धयदलघूर्भवंती[2] भूमि वहञ्शेषो नि(l.2)रहङ्कारो जात इत्यर्थः
...... .. .. .. ..... (l 3) -- -- फणिमारणात्फणिपतिस्तुष्यतीति
चित्रम् ॥                                                                25.

भुवमुद्धरन्नजनयन्नरकं
प्रममाथ तं मधुरिपु(l 4)श्च पुनः .
स पुनस्तथा त्रिदिवमर्जितवा-
न्क्रतुभिश्च तं सुवसतामनयत् ॥

भूमिमुद्धरन्मधुरिपुर्नरकमु(l 5)दपादयन् ततस्तम एव नरकं हतवान्
स राजा पुनर्भूमिमुद्धरन्निरुपद्रवां कुर्वंस्तथा स्वर्गमर्जि(l 6)तवान्स तं स्वर्गं
यज्ञैस्सुवसतां यथानयत्. यज्ञतृप्ता देवास्स्वर्गे सुखमासन्नित्यर्थ. ॥     26.

अतिसं(l 7)कुचन्नवयवैस्सकलै-
र्यमधस्स्थितो वहति कूर्मपतिः .
उपरि स्थितस्सकलभूमिभृतां
स विकस्वरः (l 8)क्षितिभरं तमधात् ॥

भूमेरधस्स्थितः कूर्मराजोऽङ्गैस्सङ्कुचन्य वहति तमेवाय राजा राज्ञामु-
परि स्थि(l 9)तस्स राज्याङ्गैर्विकसितोवहन ॥                              27.

अवहेलया यदकरोत्स किम-
प्यतिदुष्करं किमपि येन विधेः(l 10) .
तत एव न ध्रुवमपत्रपया
तदधिष्ठितां स वसुधामरिशत् ॥                                           28.

यदि वा शुचेरजनि यस्य कुले
स निधे(l 11)र्गतिः परिभवेप्वभवत् .

1 Is it °न्दरवंदरापूर्व° ?    2 Ms °वां    3 Ms °अत्र°    4 Ms. °नत्°.
5 Ms °श्वा.    6 Ms °अविग°. See Comm    7 Ms °ये न°

भगवान्स्मरन्नुपकृति न तत-
स्तदलङ्कृताः परिबभूव दिशः ॥

सोयत्नेन यत्सम(l 12)पादयत्तांद्विधिनापि कर्त्तुं यद्दुष्करम् अत एव ल-
ज्जया . ध्रुवं सभावनाया . स विधिस्तदाश्रितां भुवं(l 13) नारिशद्धिसित-
वान् . रिश हिंसार्थस्तौदादिकः . अविशादिति पाठश्चिन्त्यः अनुकूलस्य विधेः
प्रवे(l 14)शस्य विवक्षितत्वात् वक्ष्यमाणपक्षान्तरस्यान्वयाभावाच्च ॥

यदि वेति पूर्वसम्भावनायाः पक्षा(l 15)न्तरमाह . यस्य कुले जातस्स
चाहमानो विधेरसुरैः परिभवे शरणमभूत् तस्माद्धेतोरुपकारं स्म(l 16)र-
न्भगवान्विधिस्तद्भूपिता दिशो नान्यथयत् . 29.

सोर्ध्वर इत्यन्त कुलकम् ॥

चरणेपि यो मदनुगं व्य(l 17)थये-
न्मुखभञ्जनं सुकरमस्य मया .
इति ते कथां स्मरति धर्मपरां
न कलिर्मुखं क्वचन दर्शयते ॥(l 18)

यो मत्सेवक पादेपि व्यथयेत्तस्य मुखभङ्गो मया क्रियते इमां धर्मनि-
ष्ठां तव प्रतिज्ञा यत्स्मरति ततो नू(l 19)न कलिर्मुखं क्वापि न दर्शयते .
कलिना हि त्वदाश्रितो धर्म पादेस्वण्डयि(?) इति भाव ॥ 30.

तव पा(l 20)दयोरपसृतास्सविधा-
द्व्ययविह्वलाः [पुनर]भाग्यशतैः .
अतिरोहिताः कमलया क्षितिपाः
प्रति(l 21)जज्ञिरे तदनु पस्पशिरे ॥

1 Ms °स्तदङ्क° 2 Ms °पादत्त° 3 Dhatupatha, Tudadi, 140 4 Ms यस्य स कु° 5 Ms °ता दिरिशो 6 Sic Evidently verse 38 is meant but metre does not allow that to begin with सो° 7 Ms °र्शयन् 8 Ms °येद° 9 Ms °हल°.

तव पाद्योस्समीपान्नष्टा अत एव भीता अभाग्यशतैर्लब्धान्यानाच्छादि(1.22)ता राजानो नूंनं परिज्ञाताः [ज्ञानस]मनन्तरमेव पस्पशिरे वाधिताः·····················अपसृतैः(1.23) भयविह्वलैरिति तृतीयाबहुवचनान्तः पाठश्चिन्त्यः . पस्पृशिरे स्पृशेश्च पाठो विमृश्यः . पस्पशिरे (1.24*) [इति स्पश वा]धने इत्यस्य लिटि रूपं . राजद्रुहं परिज्ञाय लोका बाधन्ते ॥ 31.

भविता पुरस्सहचरैर्द्विषतां(1.1)
वरिवस्यतां नृप भवच्चरणौ .
इति सूचितं खलु तवैव नखै-
र्यददर्शयन्प्रतिनिधीननुगान् ॥

हे नृप त्वत्पा(1.2)दौ शरणीकुर्वतां शत्रूणां सहचरैः पुरो भविता भविष्यते इत्येतत्त्वन्नखैरेव सूचितम् . अत्र साध्ये साधन(1.3)माह . भवन्नखास्शत्रूणां प्रतिनिधीन्प्रतिविम्बाञ्शत्रूणामनुगानदर्शयन् भवन्नखेषु निर्मलत्वा(1.4)न्नमन्तो भवद्द्विषः प्रतिविम्बिताः ते प्रतिविम्बा भवच्छत्रूणां सहचरा पुरो वर्तन्ते इत्यर्थः . त्वत्पादसेवका(1.5)नां सहचरसामग्री भवतीति भावः ॥ 32.

न हिमालयो न हिमवत्तनया
न हिमद्युतिर्न हिमशैलनदी .(1.6)
हिमवत्सखो न च हिमाद्रिवृषो
हरहृष्टये तव यशांसि यथा ॥

यथा त्वद्यशांसि हरस्य हर्षाय तथा(1.7) न हिमालयाद्याः भवद्यशोभिर्विश्वस्य पालनादिति भावः . 33.

हृदयङ्गमं न जलजन्म विधे-
[र्न] म(1.8)[धु]द्विपो भुजगतल्परुचिः .

---

1 Ms. नून°. 2 Ms. °ज्ञात°. 3 Ms. पस्पर्शि°. 4 Dhatupatha, Bhū-adı, 912.
5 See note 4,p.71. 6 Ms. भावि°. 7 Ms. °भ्रमन्तो°. 8 Ms. नवदि°.
9 Ms. °न्नेस्य°. 10 Ms. नदि°. 11 Ms. °मेन.

स्फटिकाचले न च शिवो रमते
तव कीर्त्तिभिस्स यदि सर्वगतः ॥

विधेर्न(१ 9)द्गाण पुण्डरीक हय तथा भुवन्न भवति विष्णोश्च तथा शेष-
शय्याभिलापो न भवति कैलासशैले च तथा द्दरो न भवति(१ 10) यदि
यस्माद्धें स ब्रह्मा हरिर्हरो वा तव कीर्त्तिभिर्हेतुभिस्सर्वगतो रमते त्वत्कीर्त्ति
सर्वगता द्रष्टु(१ 11) स भ्रमतीति पुण्डरीकादौ न रमतीति भाव ॥ 34

पृथिवी त्वया फलवती विहिता
ऋतुभिर्हि ते जल(१ 12)मुचो जलदाः ,
उपतिष्ठते हविरिनं ज्वलना-
त्परिपूर्यते द्विजपतिश्च ततः ॥

त्वया भूर्वहुफला सम्पा(१ 13)दिता यतो यज्ञैर्हेतुभिर्मेघा वृष्टिममुचन्
हविराहुतिरिनमादित्यमुपतिष्ठते अग्नौ प्रास्ताहुति(१ 14)स्सम्यगादित्यमुप-
तिष्ठते इत्यागमात् ततश्चन्द्रश्च पूर्णो भवति 35

[उ]दरंभरिस्तव शिखी यजनैः(१ 15)
[सु]हृदस्सुखा ‿ सुवहत्यनिलः ,
न विभाति खं न निगमध्वनिना
य[जमा]नता न भवता न धृता ॥

त्वत्कर्तृ(१ 16) [उ]दर विभर्त्ति पोपयति
ग्रेस्सुखाद [निग]मशब्देन ख(१ 17) न [न शो]भतेपि तु शोभते
भवता यजमानभावो न न धृत ॥ 36

इ‿‿‿‿‿‿‿‿‿ती[11]-
जेगदु[र्हि या](१ 18)स्त्रिजगतीप्रकृतीः ,

---

1 Ms मपु 2 Ms त to वे lc nder 1 9 3 Ms तया lc under 1 9
4 Ms तया lc under 1 10 5 Ms नि स्सव 6 Ms पान्ट 7 Manu 3 76
8 Ms धता 9 Ms मस्स 10 Ms भव 11 Ms वीज,

यदि ता भवानुपकरोति सदा
तदलं सुरैर्भवत एव [न]मः ॥

त्रिजगत्याः प्रकृती(l.19)रुपादानकारणानि सतीर्विभोः परमेश्वरस्य मूर्त्तीर्भूम्यादिका या जगदुस्ता इ·········· ··(l.20)भवान्नित्यं यदुपकरोति तत्कि सुरैः न तान्नमस्यामः तुभ्यमेव नमः ॥ 37.

⌣⌣–⌣–⌣⌣⌣–(l.21)⌣रितै-
र्विनमन्मुखश्चिरमभूद्वचनैः.
न परीक्ष्यतां कथमसौ पृथिवी-
परिपा[ल]–⌣⌣⌣–(l.22)⌣⌣कम् ॥

ब्रह्मप्रोक्तैः पू[र्वोक्तै]र्वचनैस्स्तवै·····················(l.23**16[1]) 38.

* * * * * * * * * * *[2]

1 Ms. पु. रा. वि. vertically on margin.

2 Copyist's remark—इत ऊर्ध्वं द्वित्राणि पत्राणि प्रायो गलितानि.

# [ चतुर्थः सर्गः ]

* * * * * * *[1]

ह्रामदभृतोप्यवमन्यमाने ।
देवस्स तार्क्ष्य इव वाजिनि वासुदेवो
हन्तव्येमृत्युमुखसंमु[खदुष्टसत्वः]।(!1)

स वासुदेवस्तेन भ्रात्रान्वितो निरगात् कीदृशः सुखा सुखावहा गति- ]
र्यस्य तस्मिन्नश्वे निषण्ण[ः मत्तह](!2)स्तिनो जितवति हन्तव्यानि मृत्युमुखा-
नि संमुखं दुष्टसत्वानि येन सः । मृत्युमुखानीति दुष्टसत्व·········(!3)-
पः । यथा तार्क्ष्ये गरुडे निविष्टो वासुदेवो नारायणो निरगात् नागा भुजगाः
दुष्टसत्वा दैत्याः शोभना [ग](!4)तिर्यस्येति च ॥ 1.

एतन्न कौतुकविधायकमादिदेवो
यद्द्रिवासरुचिरेति किरातलीलाम् ।
चित्रीयते त्व(!5)वनधीरपि वासुदेवो
लीलाकिरातसरणिं स यदाललम्बे ॥

अद्रिवासे रुचिर्यस्य स आदिदेवो गिरि[शो] (!6)यत्किरातरूपमवहत्त-
न्नाश्चर्यम् अद्रिस्थानां किरातग्रहणोपपत्तेः इदं तु चित्रीयते आश्चर्यं भव-

---

1 Copyist's remark at the top of the page—अस्य पत्रस्य स्थानं सम्यक् निश्चेतुं न शक्यते. 2 Restore भ्रात्रान्वित- सुखगतौ निषण्णस्तिरस्यो नागान्नहा॰. 3 Ms. दृवं॰. 4 Ms. नाना. 5 Read किरातरूप॰.

[ति] (1.7)यन्नवनंधीर्यस्य अवने रक्षणे धीर्यस्येति च स राजा लीलया किरातत्वमग्रहीत्. चित्रङ आश्चर्ये इति क्यच् ॥ 2.

सर्वा[भिरेव] (1 8)मृगजातिभिरैकमत्यं
निर्माय मानमवधीर्य पशुत्ववृत्या.
अग्रे विसृष्टमभयार्थितयेव रंहः[3]
स[र्वस्वभूत](1 9)महरन्नृपतेस्तुरङ्गः ॥

पशुभावेन मानं त्यक्त्वा साम्मत्यं कृत्वा सर्वाभिर्मृगजातिभिरभया[र्थितया] (1 10)प्रहितं सर्वस्वभूतवेगं राजाश्वोहरदित्युत्प्रेक्षा. अयमर्थः राजाश्वं दृष्ट्वा मृगाणां वेगो नष्टः·········(1 11)हृते त्वभयाभिलापाद्राजाश्वस्य मृगैस्स्ववेगो दत्त इत्यर्थः[4] ॥ 3.

स प्राविशद्वन[भुवं वनदेवतानां]
[संगीत](1 12)केषु दधतीं सुखितोपविष्टम्.
उन्मालकाय परिपूर्णफलैर्विमुक्तैः
प्रा[णैरिव]⏑⏑–⏑⏑–⏑–(1 13) यूथम् ॥

वनदेवतानां सङ्गीतेषु सत्सु निश्चलं सुखितयोपविष्टं मृगकु[लं]······ ·········(1 14)ष्टः अतस्संभाव्यते प्राणानां संपूर्णफलत्वादुन्मालकाय प्रसाददे···र्थे[5] त्यक्तैः प्र[ाणैस्त्यक्त](1.15)प्राणो हि निश्चलो भवति ॥ 4.

आकस्मिकं निपतितं परमान्नपात्रे
पापाणखण्डमिव⏑⏑–⏑–⏑––– .(1 16)

---

1 Ms धीर्यं° to °ने lc on margin. 2 Ms. धीय°. 3 Ms °अन्.
4 Ms क्यच् cf Patanjali's Mahabhashya on Panini, 3.1.19 (नमोवरिवश्चित्रङः क्यच्)-क्यजादिषु प्रत्ययार्थनिर्देश. कर्तव्य. । नमस. पूजायाम् । वरिवस. परिचर्यायाम् । चित्रङ आश्चर्ये । etc. This sūtra is quoted by Jonarāja in his comm. on Shrikantha-charita, 16.48, as नमस्तपो(sic)वरिवश्चित्रङः क्यच्, thus doing away with Vārtika तपस. परस्मैपद च on Panini, 3.1.15. वरिवस परिचर्यायामिति क्यच् occurs in the same at 19 38. 5 Ms. र्ह°. 6 Ms. lc. mark but no lc. 7 Is it दानार्थे ?

—‿—‿‿णविघ्नमवाप्य वाजि-
कोलाहलं मृगकुलानि मुखान्यधुन्वन्

(117) 5.

[Lines 15 to the end of page missing](*)

र्वां मृगाणा प्रसाद इव कृत इत्यर्थ ॥ 6.

नीलोत्पलभ्रमवशाद्भ्रमतामलीना-
माराढनूदितगताग(1)[त]या दृशैव ·
उत्थानविघ्नजननीं श्रवणामृतौघे
मङ्क्त्वा स्थिता श्रवणशक्तिमिवोद्धरन्तः ॥

दृष्टौ नीलोत्प(2)लमिति भ्रमता भ्रमराणा गतागतानुवादिन्या . गीतप्रियत्वादितिभाव दृष्ट्यैव श्रुतिशक्तिमिवोद्धरन्त (3) श्रवणामृतप्रवाहे निमज्ज्य स्थितामुत्थाने विघ्न कुर्वतीम् आकर्णनामृते मग्ना श्रुतिशक्तिमुद्धर्तुमिव द(4)ष्टि व्यापारयन्तीत्यर्थ . यश्च घटादिक कूपादिकादुद्धरति स गतागतानि करोति ॥ 7.

तालोद्गमैः खुरपुटा(5)हननेन भूमे-
र्ग्रैवेयगुञ्जितगुणेन च वाहनानाम् .
वीदयास्यमात्रमपि किंपुरुषभ्रमेण
गन्तु व्यलम्बिषत(6) मन्दधियः कुरङ्गाः ॥

भुव खुरघातेन तालाधारणैरश्वाना ग्रीवालङ्करणशब्देन चाश्वाना मुखमात्रद(7)र्शने गीतप्रियत्वेन . न्शोनन्यव्यापारत्व हेतु . गायता मुखानि लोका पश्यन्तीति वस्तुस्थिति . मुखमात्रद(8)र्शनेन किन्नरभ्रान्त्या मन्दभया इव मृगा ॥ 8.

1 Is it धया ? 2 Ms "दरन्तुम 3 Ms "ष्यना" 4 Add गत्वा व्यलम्बिषत

नानाविधश्रुतिसुखाहृतशब्दसार-
सारङ्गमांसरसनाभ्यस(1.9)नानुभावात् ।
संक्रान्तगीतसमया इव सर्वगात्रे-
ष्वारेभिरे किमपि कर्णसुखं शवर्यः ॥

शवर्यः किरातव(1.10)ध्वः कर्णसुखं प्रारब्धवत्यः । नानाविधश्रुतिसुखकारी आहृतश्रुतशब्दसारो यैस्ते सारङ्गा मृगास्तेषां मांसस्य(1.11) रसनं भक्षणं तदभ्यासातिशयात्संक्रान्तः परिणतो गीतसमयो यासां ता इत्युत्प्रेक्षा ॥ 9,

व्याधाङ्गनाभिर(1.12)थवा वनदेवताभि-
र्यद्गीयते किमपि तच्चरितं मदीयं ।
किं हेतु कर्तृपदवीमिदमेति मृत्यो-
रित्येष भूप(1.13)[तिरदाद]भयं मृगेभ्यः ॥

किरातस्त्रीभिर्वनदेवताभिश्च किमपि लोकोत्तरं तत्प्रसिद्धं मदीयं च(1.14)[रितं गीयते] तन्मृत्योर्हेतु कर्तृत्वं किमेतीति स मृगेभ्योऽदादभयम् । मद्गीतश्रवणश्रद्धयानपसरतां(1.15)............[म]रणद्वारं माभूदित्यभयं ददावित्यर्थः ॥ 10,

प्राणात्ययसानसमयेप्यपतिष्यमाने
दत्ता(1.16)

दर्भाङ्कुरेषु मृणालभ्रान्त्या हेतुभूतया दर्भाङ्कुराञ्जिह्वया लिहतो जिह्वायां पद्मपत्रभ्रान्त्या जिह्वां दशनैर्लिह(1 2)तः दूरावनम्रैर्वदनैरुन्नमनात्क्रमेणात्ताः पीता मातृस्तना यैस्तान्वराहपोतान्स नावधीत् ॥ 12.

नैसर्गिकावि(1 3)चलवर्णगुणस्य यत्न-
निष्पन्नवर्णगुणसङ्गमसुत्यजेन ।
दिग्वाससेव कृशशास्त्रमुखेन देवो
बाधां द्विज(1 4)स्य शिखिनो विशिखेन नैच्छत् ॥

स्वाभाविकोऽविचलः स्थिरो वर्णगुणो नीलपीतादिर्यस्य द्विजस्य म-यूरा(1 5)देः पक्षिणो राजा बाधां नाकरोत् केन यत्नेन निष्पन्नो निष्पादितो यो वर्णो गुणसंगमस्तेन हेतुना सुत्यजेन विशिखेन. वि(1 6)गलिता लुञ्चिता शिखा केशा यस्य तेन शिखिनश्चूडावतो द्विजस्य कस्यचिद्बाधां नेच्छति अविचलो वर्णो (1.7)ब्राह्मणत्वं गुणः पाठादिश्च यस्य यत्नेन निष्पन्नो वर्ण-गुणो ब्राह्मणगुणः पाठादिस्तेन सुत्यजः. कृशं शा(1 8)स्त्रं यस्य तन्मुखं यस्य अल्पशास्त्रज्ञेनेत्यर्थः ॥ 13.

यत्पुण्डरीकमवधीत्तत एव चन्द्रा-
पीडोयमित्यधिजगाम यश(1.9)स्स राजा ।
दूरं गतस्तु मृगयाव्यसनेन चित्रं
कादम्बरीं न मनसापि कदाप्यपश्यत् ॥

स राजा पुण्डरीकं व्याघ्रं(1 10)मुनिपुत्रं च यदहिंसीत्ततोयं राजा च-न्द्रापीड इति प्रसिद्धिं प्राप्तवान्. चन्द्रापीडो राजा पुण्डरीकं मुनिपुत्रं ह-तवान्(1 11) अयं च पुण्डरीकं व्याघ्रं हतवान् इति चन्द्रापीड इति प्रसिद्धिं प्राप्त्. आखेटकव्यसनेन तु दूरगतोपि मनसापि(1.12) कादम्बरीं मदिरां

---

1 Ms °भ्रान्त्या  2 Add नद्य.  3 Ms. °गुणसे°, सगम being lc. under 1.5.
4 Ms °शांत्रज्ञ°.  5 Ms. °अ.

कादम्बरीं नाम स्त्रियं च न लब्धवान्. चन्द्रापीडेन राज्ञा कादम्बरी लब्धा अयं पुनश्चन्द्रापी(l.13)डोपि भवन्कादम्बरीं न लब्धवानित्यर्थः ॥ 14.

सुप्तो हरिः क्वचन भूपतिना गुहां[यां]
—⏑—⏑⏑⏑⏑⏑——⏑⏑—(l.14)बभूवे .
दंष्ट्रानखमकरकेसरचन्द्रिकाया-
मूष्माणमात्मन इवा⏑——⏑——(?) .

…………[सु](l.15)प्तसिंहो धनुर्गुणटाङ्कारैराहूतः दंष्ट्रा च नखमकराश्च……………(l.16)……………जहुवांबभूवे इति चिन्त्यम्……………(l.17) 15.

{Lines 18 to end of page missing}(*)

[प्र]माप्तुम् ॥

स्वतन्त्रैस्स्वेच्छाकल्पितैर्वचनैस्स्वैरात्मीयैस्तन्त्रवचनैः कर्तृभिर्दुष्टसत्वसिंहादिरल्पसत्वश्च(l.1) [कुपुरु]षो महतां साम्यं यदि यन्नीयेत . समर्थनायां लिङ् . तेन साम्यनयनेन हेतुना स दुष्टसत्वो महद्भयो(l.2)[मरणं] सहते ; लभते इति वा पाठः . तथा हि माणवकत्वेन रूढमसमैस्साम्यमेव मलं निवारयितुं सिं(l.3)हं सोवधीत् . सिंहो माणवक इति लक्षणाया उदाहरणं प्रसिद्धम् . ततो राजैवमिवाचिन्तयत् अ(l.4)हमपि बाल्ये माणवक एवासम् अतो मम च सिंहेन साम्यं जातं तन्मम मलमतस्तन्माप्तुमहं(l.5) [सिंहमेव हन्]मीति सिंहो राज्ञा हतः सिंहे हते सिंहसाम्यं न केचित्कथयन्तीत्यर्थः ॥ 16.

प्राप्नोति साधु(l.6)[रुपमानतया] स्थितोपि
प्राणप्रयाणसमयेप्युपकारकत्वम् .

---

1 Ms. 'द्रापी'. 2 Ms. 'ह'. 3 Is it जहुवांबभूवे ? 4 Ms. 'मुष्मा'.
5 Restore–साम्यं स्वतन्त्रवचनैर्यदि दुष्टसत्वो नीयेत तेन मरणं सहते महद्भयः । सिंहं निजात्मनि स माणवकत्वरूढं राजावधादसमसाम्यमलं प्रमार्ष्टुम् ॥ 6 Ms. 'शिर्'.

श्रुत्वा कदाचन नृपेण हि गौरिवेति(17)
प्राप्तः पुरोपि गवयो घृणया न जघ्ने ॥

उपमीयते येन तदुपमानम् तद्भावेनापि स्थितस्साधुर्म(l 8)रणावसरे-
प्युपकारं करोति तथा हि यथा गौस्तथा गवय इति पूर्वं श्रुत्वा पुरः प्राप्तोपि
गवयो रा(l.9)ज्ञा न हतः कारुण्यात् ॥ 17.

पञ्चाननोहमभवं न ममाधुनास्ति
तत्पञ्चमं मुखमितीव भयाद्विधात्रा .(l 10)
दिङ्नागचक्रमपि पादतले विधातुं
पादाष्टकप्रकटनात्परिपूरितेच्छम् . 18.

भित्वा गते शरभमस्य(l 11) शरे सुदूरं
पुष्पाञ्जलिर्गगनतो भुवि यः पपात .
मन्ये स निर्वृतधिया दिवि राशिचक्र-
मध्यस्थिते(l 12)[न हरिणा?]⏑ ⏑ – ⏑ – –[1]

............महं पञ्चाननः पञ्चसंख्यमुखस्सिंहश्च प्रागभवमद्य ▮ मम
(l 13)...................पञ्चममुखस्य च्छेदात् अतः पञ्चाननत्वमनेन
गोपितमिति भ(l.14)'...................हन्तुमिच्छा पूरिता यस्य तं कुतः
पादाष्टकनिर्माणात् तं शर(l.15)[भं]..... ......[आकाशा]द्यः पुष्पाञ्ज-
लिः पपात स नूनं हरिणा...[रा]शि...वि(l.16) 19.

{Lines 17 to end of page missing}(**18)

तैरशून्यं स्वेच्छया गृहीतं वरं वारणानां चक्रवालं यत्र तत् स्वच्छन्दं
चारिणश्शिखिनो मयूरा चहूनयश्च(l.1) यत्र विहरन्तो मृगा यत्र राज्ञाभ-
यदानादिति भावः ॥ 20.

---

1 Restore हरिणेन समर्प्यते स्म. 2 Copyist's remark at the top of the page—अस्यापि पत्रस्य स्थानं न सम्यक् निश्चेतु शक्यते। 3 Restore ...'शून्यम्। स्वेच्छा-गृहीतवरवारणचक्रवालं स्वच्छन्दचारिशिखि तद्विहरन्मृग च (?) ॥

आखेटिकाव्यसनिनो नृपतेर्विशेषा-
दायासि(1.2)ता इति गतैरतिमान्यभाव्यम् .
अश्वैरपि यवसावसंरश्चिरेण
सर्पैस्त्वरण्यसुलभैः करभा ननन्दुः ॥

अश्वा(1.3)मया खेदिता इत्याखेटिकासक्तस्य राज्ञोऽत्यर्थं मान्यतां गतै-
रश्वैर्यवसेशनेयसरश्चिरेण प्राप्तः वनसु(1.4)लभैस्सर्पैर्हेतुभिरुष्ट्रा ननन्दुः.
उष्ट्राणां सर्पाशनत्वात् ॥ 21.

नित्यानिमेषनयनत्वमयं विपाकं
दुष्कर्मणां(1.5) करभदर्शनतो विदित्वा .
पाणी पिधानपदवीमुपनीय काश्चि-
द्रूष्टुं नरेन्द्रमपि नापुररण्यदेव्यः ॥

नित्यं(1.6) यदनिमेषाक्षत्वं तद्रूपं पापमुष्ट्रदर्शनान्मत्वा प्रथममस्माभिः
करभो नूनं दृष्टो यतो निर्निमेषत्व(1.7)मक्ष्णां जातमन्यथाक्षि निमेषसुखं
लभेत. उष्ट्रोदर्शनीय इति प्रसिद्धिः. अतो हस्तौ दृष्टेः पिधानत्वं(1.8) नीत्वा
वनदेवता राजानमपि द्रष्टुं न प्रापुः ॥ 22.

वामेतरेण नयनेन च बाहुना च
कृत्वैकमत्यमिव नित्यमपि(1.9) स्फुरद्भ्याम् .
राजा निरुद्धनगरीगमनोद्यमोऽथ
प्रासादमुन्नतमकारयदप्यरण्ये ॥

सांमत्यमिव कृ(1.10)त्वानवरतमेव कम्पमानाभ्यां दक्षिणाभ्यां बाहु-
नेत्राभ्यामिव निरुद्धो नगरीगमनोद्यमो यस्य स राजा वने प्रासादम(1.11)-
कारयत्. सुनिमित्तदर्शनाच्चेन वने प्रासादः कृत इत्यर्थः ॥ 23.

1 Ms. °सार°. 2 Ms. °सुभैः. 3 Ms. °रत्व.

इन्द्रः करोति मम किं सति वासुदेवे
मुञ्चा(l.12)⏑—⏑तमवश्यममुष्यं भाग्यैः .
भावी वनेपि लवणाम्बुनिधिर्ममेति
प्रालेयशैलसुतमास्पद(l.13)तामिवाप्तम् ॥ 24.

आत्ता मया हरिणजात्यभयप्रतिज्ञा
क्रीडाकिरातभयमप्यपसारयामि .
—(l.14)त्रस्यं तद्विधुमृगस्य नभोवनेस्मि-
न्दत्वेति निर्मितमिवातिशयेन तुङ्गम् ॥

वासुदेवे राज्ञि नाराय[णे] (l.15)·········तिं·········किं करोत्य-
··················[भू]पवासुदेवस्य भाग्यैर्वनमध्ये·········(l.16) 25.

[Lines 17 to end of page missing](*)

हिं कम्पते. स्यात्प्रासादो वैजयन्त इत्यमरः ॥ 26.

स्थानस्य तस्य महिमानमसौ विदित्वा
तत्र प्रवेशमपरस्य नि(l.1)षिध्य देवः .
द्वित्राण्यहान्यनुवभूव महेभरामा-
वैधव्यभीतिभिर्पर्जं मृगयाविनोदम् ॥

तस्य प्रासादस्य मा(l.2)हात्म्यं ज्ञात्वान्यस्य तत्र प्रवेशं रुद्ध्वा स राजा महेभरामाणां हस्तिनीनां वैधव्यभीतेर्भिपंजं निवारकमाखे(l.3)टकं व्यधात् . एकाक्येव वनेसाववसदित्यर्थः ॥ 27.

मध्याह्नमात्मतिवाह्य मृगेन्द्रमुक्त-
मुक्तावलीसिकति(l.4)तासु वनस्थलीषु .

1 Ms. °मनुष्य. 2 Is it °त्रस्य° ? 3 i e. मनय. 4 Amara, 1.46.
5 Ms. °षयं. 6 Ms. °सावसदि°.

दत्तद्युयानपरिखिन्ननिपरणशक-
शङ्का[भिरा(1.14)भरणदी]धितिभिर्विभान्तम् ॥

अम्बुधरा एव जङ्गमचन्द्रशाला वातायनानि तेषु क्षणिकमिन्द्रचा-
पमासूत्रि(1.15)············तथा द्युयानेनाकाशगमनेन············स्य
श[ङ्का] दत्ता याभिस्ताभिर्भूषणदीप्तिभिरशोभ(1.16) ·　　31.

[Lines 17 to end of page missing](**19)

ईरं मुक्ताहारं धारयन्तम् अतस्संभाव्यते कान्त्यतिशयानुरक्तया ना-
कलक्ष्म्या निजकण्ठा(1.1)दवरुह्य दत्तवीरामयभूषणम् ॥　　32.

हारान्तरालगतनायकपद्मराग-
व्याजेन विभ्रतमि(1.2)वानुगतं ग्रहौघैः ,
केनापि कारणलवेन गतं द्युवीथीं
भूमेरुपायनकृते [स्व]तनूजमेव ॥ (1.3)

हारमध्यस्थितस्य नायकभूतस्य पद्मरागस्य व्याजेन भूमेस्स्वतनुजमेव
भौममेव बिभ्र(1.4)न्तम् . कीदृशं समहगणं भूमेर्मातुस्सकाशाद्द्युमार्गमारूढं .
कुत इत्याह केनापि का(1.5)रणांशेनोपायनार्थम् . भूम्या दिवो दर्पणार्थं भौम
एव विसृष्ट इत्यर्थः ॥　　33.

केयूर(1.6)योः कटकयोश्च निवेशितानां
ज्योतिर्भरैरुभयपार्श्वगतैर्मणीनाम् .
निर्विघ्नमम्बरगतागत(1.7)सिद्धिहेतोः
सन्दर्भयन्तामिव चित्रशिखण्डिभावम् ॥

---

1 Ms. 'प्रजाद'.　2 Copyist's remark at the top of the page, पत्रेस्मिन् लेखकान्तरप्रतीतिः.　3 Ms. 'न्यानि'.　4 Sic. अवरोप्य.　5 Ms. 'सता'.　6 Ms. 'रुपान'.　7 Ms. 'तनुज'.　8 Ms. 'भोम'.　9 Ms. 'भव'.　10 Ms. 'पायार्थं'.　11 Ms. 'यो॰ च'.　12 Ms. 'मरवर'.

अंगदयोर्वलययोर्विपययोः(1.8) स्थापितानां रत्नानां पार्श्वद्वयगौ रश्मि-भिर्हेतुभिर्निर्निरोधमाकाशगतागतार्थं चित्रस्य शि(1.9)खण्डिनो मयूरस्य स-र्पाणां च भावं प्रकाशयन्तम् ॥    34.

संवर्धमानमृगदावरतेर्न(1.10)रेन्द्रः
दुर्मोचनीयमखिलं भवता कुलं मे ,
भूत्वा द्विधाभेमिव कुण्डलकान्तिभङ्ग्या
कर्णद्व(1.11)ये गुहशिखण्डभृतोच्यमानम् ॥

अतिमृगयाव्यसनाद्राज्ञो मद्वंशस्त्वया रक्ष्य [इति] (1.12) कुण्डलद्वयस्य व्याजाद्रूपद्वयं कृ[त्वा]······[म]यूरकलद्व(?)······नम् ॥    35.

व्यो[मपया](1.13)ऽसुलभश्रमया मुखेन्दुं
संस्पृश्य लब्धरसया च सलज्जया च .
चूडामणेरागतया नि(1.14)शयेव भासां
संचध्यमानदृढनिद्रमुपर्मुखेऽपि ॥

प्रभातेऽपि··········संचध्यमाना(1.15) दृढा निद्रा यस्मिंस्तमित्युत्प्रेक्षा , विपर्ययो निशायाः संभावने विषयमाह चूडाम(1.16)णेरभिन्नया दीप्त्येति . निशायाः कथं तत्र निद्रेत्याह व्योम्नि मयाणे सुलभः श्रमः खेदो यया(1.17) उपया मुखचन्द्रं स्पृष्ट्वा लब्धशृङ्गाररसया च सलज्जया च . उपमुखेऽपीत्युपरशब्दो रेफां(1.18)न्तः प्रायो न दृष्टः ॥    36.

पुष्पव्रजाममरलोकभुवाम[पास्त]-
मारब्धवद्भिरलिभिर्मधुरं(1.19) ध्वनद्भिः ,
विद्याधरोऽयमिति केश्चन मूर्तिमद्भि-
र्नि[शाम्य]रिव [समा]श्रितमाश्रि[त्यम्]॥(1.20)

---

1 Ms. [illegible]    2 [illegible]    3 Ms. [illegible]    4 Ms. [illegible]
5 Ms. [illegible]    6 Ms. [illegible]    7 Ms. [illegible]    8 Ms. [illegible]
9 Ms. [illegible]    10 Ms. [illegible]    11 Ms. [illegible]    12 Ms. [illegible]

नाकोत्पन्नानां पुष्पमालानां सेवां कुर्वद्भिर्यतो मधुरं ध्वनद्भिर्भ्रमरैर्हेतुभिरेव विद्याधरो(1.1) भवतीति हेतुना मूर्तैर्विद्याचरैरिवाश्रितं यामिकत्वं यस्य ॥ 37.

द्रष्टव्यदर्शनमयं फलमा(1.2)प्तकाल-
माहर्तुमीक्षणयुगं मनुजेश्वरस्य ।
आनन्दबाष्पजलनामनि सिद्धतीर्थे(1.3)
शुद्धिं नयन्तमिव तत्समयावतीर्णे ॥

प्राप्तकालं द्रष्टव्यस्य दर्शनरूपं फलं नि(1.4)रूपयितुं तत्कालजाते हर्षाश्रुतीर्थे राज्ञो नेत्रद्वयं शुद्धिं प्रापयन्तम् । तीर्थजशुद्धिप्राप्तव्यं(?) लभ्यते ॥(1.5) 38.

तं वीक्ष्य भूपतिरचिन्तयदेष ताव-
दस्वप्नतां व्यभिचरत्यथ शेषशायी ।
देवोयमेतदपि(1.6) नास्ति स दृश्यते यै-
स्तेषां भवन्ति नहि दिव्यदृशां विकल्पाः ॥

राजैवमचिन्तयत् एष पु(1.7)रुषोस्वप्नतां देवत्वं व्यभिचरति । देवा हि निद्रारहिताः । अस्वप्नतां व्यभिचरति सु(1.8)प्त इति च । [दे]वोपि हरिस्स्वपतीत्याह अथ शेषशायी देवो हरिरयमित्येतदपि नास्ति यतो यैस्स हरिर्दृश्यते(1.9) तेषां दिव्यदृशां सतां विकल्पः कुतः । सुप्तत्वाच्छेषशायीति विकल्पः ॥ 39.

गन्धर्वसिद्ध(1.10)गणकिन्नरलक्षणानि
नात्रासते न च मनुष्यविशेषमेनम् ।
संभावयामि न(1.11) च वैश्रवणस्य योपि
ध[र्ता] नरः स्पृशति सोपि ममोपधानम् ॥

---

1 Ms. यावि°. 2 Ms. °मो° crossed after नि°. 3 Ms. निधूप°. 4 Ms. राज्ञा.
5 Is it °शुद्ध्या प्रा° ? 6 Ms. यैः ते°. 7 Ms. °कल्प.. 8 Ms. °जेवं चि°.
9 Ms. °वो° to °ह &c. on margin.

गन्धर्वादीनां लक्ष(। 12)णानि नास्मिन्वर्तन्ते न चैनं विशिष्टं मनुष्यं संभावयाम्यहम् कुबेरस्य यो वहन(। 13)भूतो नरस्सोपि मम प्रतीति (?). 40.

नागोपि नाय[मुरग]त्वविभिन्नयापि
मूर्त्या न हि व्य(। 14)[भिच]रन्त्यहयः फणित्वम् .
लोभस्वभावमलिना खलु जातिरेषा
रत्नं वराकधनव(। 15)द्विजहाति नाङ्गात् ॥

उरगत्वात्पुच्छादिमत्वाद्विभिन्नयापि मूर्त्या मूर्त्यन्तरेणाप्ययं(। 16) न नागः तथा हि नागाः फणान्न त्यजन्ति. हेत्वन्तरमप्याह एषा जातिर्नागजाति(। 17)र्लुब्धा स्वाङ्गाद्रत्नं न त्यजति अतो वराकधनवदित्युपमा॥ 41.

विद्याधरत्वमपि यद्द्विज(। 18)पादलेप-
कौक्षेयकाञ्जनमलत्रयकल्पमपं स्यात् .
तत्तावदस्य न भवत्यथ यः प्र(। 19)कार-
स्तुर्यस्तमस्य मुखदर्शनतो विधास्ये ॥

पादलेपखड्गाञ्जनमलत्रयेण क(1..0··20)ल्पितं यद्विद्याधरत्वमपि स्यात्तदप्यस्य न तावद्भविष्यति अथ यो विद्याधराणां चतुर्थः प्रकार(। 1)स्तमप्यस्य मुखदर्शनात्करिष्यामि ॥ 42.

ध्यात्वेति सान्ध्यशतपत्रसगोत्रमास्यं
व्यात्तं मनागवलुलो(। 2)कपिपोस्तदीयम् .
उर्वीपतेर्गगनसागरफेलिनावा
लीनं तले गुलिकया चरणाङ्गुली(। 3)नाम् ॥

---

1 Ms a lc mark after °ta, but no lc  2 Ms हेले  3 Ms °चगु crossed after °स्व.  4 Ms °सूर्त्ते°.  5 Ms has ध्या त्वे ति vertically on margin.  6 Ms. बरुलाय  7 Ms °फेल्गुलि°.

सान्ध्यं किंचिद्विकसितं यच्छतपत्रं पद्मं तस्य सगोत्रं सदृशं मनाग्व्यात्तं विकसितं तदीयमा(1.4)स्यं द्रष्टुकामस्य राज्ञः पादतले गुलिकया लीनं . भावे क्तः . गगनमेव सागरस्तत्र केल्य(1.5)र्थं नावा . गुलिकाविद्याधरा गुलिकाप्रभावाद् व्योमन्युड्डयन्ते ॥ 43.

> संस्पृष्टमात्रचरणश्च तया(16) स दध्यौ
> भूयोपि शेखरमणिः प्रतिभावनानां .
> त्वं संदिहानमिव मानस मा स्म भूमें
> विद्या(1.7)धरोयमिति तेस्तु दृढा प्रतीतिः ॥

तया गुलिकया स्पृष्टपाद एव स प्राज्ञानामग्रणीः पु(1.8)नरपि चिन्तितवान् हे मानस त्वं कर्तृ संदिहानं संदेहवन्मा स्म भूः यतोयं पुरुषो विद्याध(19)र एवेति निश्चयस्तवास्तु ॥ 44.

> इन्द्रादिपूजितगरिष्ठदृढप्रभाव-
> वाणावलीप्रसवनर्म(1.10)दया मदीये .
> अस्मादवश्यमनया वदनेन्दुबिम्बा-
> न्निर्गत्य विन्ध्य इव केलिगृहे निपेते ॥(1.11)

इन्द्रादिभिः पूजिता गरिष्ठा दृढा ये प्रभावास्त एव वाणास्तत्पङ्क्त्याः प्रसव उत्पादने नर्मदया(1.12) तथा विन्ध्यपातिन्या . नर्मदाया हि वाणाः प्रभवन्तीति प्रसिद्धिः . अनया गुलिकयास्य विद्या(1.13)धरस्य मुखचन्द्रान्निर्गत्य विन्ध्यसमे मदीये लीलावासे पतितम् ॥ 45.

> एवं विकल्पयति(1.14) भूभुजि भूभुजिष्या-
> स्वेच्छाप्रकारयरमणीयपदार्थसार्थे .
> विद्याधरस्स बुबुधे [च मदीय]त्व(1.15)क्रा-
> द्भ्रंश सिद्धगुलिकेति समभ्रमीर्च ॥

1 Ms. दृश्द्वाकाय°. 2 Ms. भूम्ने. 3 Ms. फ्तो°. 4 Ms. °रिष्ट°.
5 Ms. इन्द्रा° . 6 Ms. °रिष्ठ. 7 Ms. समभ्रमीश.

भूरेव भुजिष्या दासी तया स्वेच्छया यथेच्छं प्र(l.16)कारया रमणीयाः पदार्थसार्था यस्य तस्मिन्नाजनि एवं विकल्पान्कुर्वति सति विद्याधर.(l 17) प्रबुद्धः मन्मुखाद्गुलिका पतितेति च ज्ञातवान् संभ्रान्तश्चाभूत् ॥ 46.

भूपालतिग्मरु(l.18)चिपादतिरोहितायां
तस्यां मनःकुमुदशाश्वतचन्द्रिकायाम् .
कष्टं नभश्चरशशी स्फुट(l.19)लक्ष्यमाण-
शङ्काकलङ्कमतिपाण्डुमुखं बभार ॥

नभश्चरो विद्याधर एव शशी मुखं स्फुटं(l 20) लक्ष्यमाणशङ्काकलङ्को यस्य तदवहत् यतोतिपाण्डुरम् कथा तन्मन एव कुमुदं तस्य नि(l 21°)त्यज्योत्स्नायां गुलिकायां राजपाद एव सूर्यस्तेन च्छादितायां सत्यां. रविपादच्छादितायां ज्योत्स्ना(l.1)यां सत्यां चन्द्रो दृश्यकलङ्कं मुखमभिमभागं वहति ॥ 47.

शून्याशयस्य वहतो वदनं विरूपं
सन्त्येव(l.2) तस्थुरिव नास्य विभूषणानि .
विच्छायतामुपगते तुहिनांशुबिम्बे
व्योम्नि स्थितान्यपि हि नैव विभान्त्युडू(l 3)नि ॥

शून्यहृदयत्वाद्विच्छायं मुखं दधतोस्य वर्तमानान्यपि भूषणानि न तस्थुरिव चन्द्रे म्लाने व्यो(l.4)मस्थान्यप्युडूनि नैव शोभन्ते ॥ 48.

उत्थितवता धरणिपालमनेन दृष्ट्वा
व्रीडाभरादवनताननताम(l.5)वाप्य .
ऊर्ध्वं गतैरवसरस्सफलस्समाप्त
इत्याशयेन वसुधैव परीक्ष्यते स्म ॥

शयनादुत्थितवता(l.6) विद्याधरेण राजानं दृष्ट्वा लज्जाभरान्नतमुखत्वं प्राप्याकाशगमनार्थं सकलः कालो गत इति(l 7) भावेनेव भूर्वीक्षिता ॥ 49.

---

1 Ms. छत्र°.  2 Ms. एवत्यं°.  3 Ms. °स्तान

वाक्छक्तिमेव सकलामपि तस्य हृत्वा
निस्संशयं गुलिकया निरगा(1.8)मि वक्त्रात् .
वीक्ष्याननं नरपतेरनुरुध्यमानः
किञ्चिद्विवक्षुरपि यन्न किमुप्यवाच ॥

नूनं सर्वा(1.9)मप्युक्तिशक्तिं हृत्वा अस्य मुखात् गुलिकया निर्गलितम् राज्ञो मुखं दृष्ट्वा सानुरोधस्स्य यतः किंचिदपि(1.10) वक्तुकामः किमपि नावदत् ॥ 50.

मन्येनुभूय गुलिकाचिरसाहचर्यं
याता क सेति सहसैव गवेषणाय .(1.11)
भाग्यानलप्रशमभस्मकणायमानै-
र्दन्तांशुभिः प्रसृतमस्य मुखाद्विवक्षोः ॥

वक्तुकामस्य(1.12) विद्याधरस्य मुखाद्दन्तांशुभिः प्रसृतम् . भावे क्तः, अतस्संभाव्यते गुलिकया सह चिरं स्थिति(1.13)मनुभूय गुलिकाया गवेषणायान्वेषणार्थं सा गुलिका क गतेति . कीदृशैः भाग्यान्येवानलः(1.14) तस्य प्रशमेन भस्मकणसदृशैः ॥ 51.

यो मानमात्रकधनस्स किमन्यतोपि
स्वप्नेपि नाम शृणु(1.15)यादवमानवाक्यम् .
अभ्यासखण्डनभयादिव मानिताया-
स्तस्यावमानवचनश्रवणं ह्यपथ्यम् ॥(1.16)

यो मानैकधनस्सोन्यस्मादपि स्वप्नेपि अवमानवचनं किं शृणुयात् अपि शब्दास्स्वस्यावमानं किं शृणुयादि(1.17)त्यर्थः तस्य मानिनो मानिभावस्य योभ्यासस्तत्खण्डनभीत्येवावमानवचश्रवणं ध्रुवमपथ्यमयु(1.18)क्तम् ॥ 52.

पृथ्वीपतिर्यदवनप्रमुखं विवक्षुं
तं वीक्ष्य भीत इव मा स्म मुखाद्युष्मात् .

1 Ms. किंचेट. 2 Ms. प्रसव. 3 Ms. न्नासु. 4 Ms. कणास. 5 Ms. भोर. 6 Ms. मुष्म.

कार्पण्यगी(1.19)रमृतदीधितिबिम्बमध्या-
दुल्केव निष्पतदिति त्वरितं बभाषे ॥

अवमानश्रवणाभावमुदा(1.20)हरति. यद्यस्मात्तं विद्याधरं मन्त्रमुखं वेणुकामं दृष्ट्वा स राजा भीत इव विद्याधरस्य मुखादमुष्मादन(1.21)ह्वोल्क-पणवाक् चन्द्रमण्डलादुल्केव मा स्म पतदित्यतस्तूर्णं भाषितवान् ॥ 53.

मान्येन धर्मविद(1.22‥21)शेनं तथान्तरिक्षा-
देत्यान्वभूयत सुपुष्पदशाप्रवेशः.
एषा यथा सकलमङ्गलकोश(1.1)मुद्रा
याता न सिद्धगुलिकेव न यामिकत्वम् ॥

मान्येन विद्याधरेण तापाकुलेनाकाशादेत्य(1.2) स्वापस्तथानुभूतः यथा मङ्गलमेव कोशस्तस्य मुद्रेयं सिद्धगुलिकेव यामिकत्वं न न प्राप्त(1.3)पि तु प्राप्त्, एवं राज्ञा गुलिकायाः प्रकाशनं कृतम् ॥ 54.

एतावतैव नृपतेर्वचनामृतेन
संपू(1.4)र्णकर्णकुहरस्य नभश्चरस्य.
राहोर्मुखादिव विनिर्गतमिन्दुबिम्बं
तत्कालमेव ददृशे मुखम(1.5)न्यदेव ॥

इयन्मात्रेणैव राज्ञो वाक्यामृतेन पूरितकर्णस्य विद्याधरस्य मुखमन्य-देव तत्काल(1.6)मेव दृष्टम् अतो राहुमुखान्निर्गतं चन्द्रबिम्बमिव ॥ 55.

आदाय तां क्षितिपतेश्च सुधांशुले(1.7)खा-
मम्भोनिधेरिव स खेचरचक्रवर्ती.
प्रारम्भचर्वितविषादविषावतीर्णां
पीठीं विधूय(1.8) परमेश्वरतामवाप ॥

1 Ms. has 7 ff. vertically on margin. 2 Ms. [illegible]. 3 Ms. [illegible].

समुद्रादिव राजश्चन्द्रलेखामिव तां गुलिकां गृहीत्वा प्रथमम(1.9)नु-भूताद्विमादादवतीर्णो प्रथमदुःखजातां पीडां त्यक्त्वा स दिविपदग्रणीः पर-मेश्वरभा(1.10)वं विद्याधरत्वं प्रापत्. धिपपीडा त्यक्त्वा परमेश्वरश्च समुद्रा-दिन्दुलेखाममर्हीत् ॥ 56.

राजान(1.11)मित्थमवदश्च महानुभाव
भावत्कमध्यवसितं मुनयो न विद्युः,
विद्याधराधिपतितां पतितां(1.12) पुरस्ता-
द्यत्पादयोरपि तृणाय न मन्यसे स्म ॥

स राजानमित्यवदत् हे महानुभाव मुनयो निस्पृ(1.13)हा अपि त्व-दीयमध्यवसितमौदार्यं न जानीयुः त्वत्पादयोरग्रे पतितामपि विद्याधरचक्र-वर्ति(1.14)तां त्वं तृणायापि नामंस्थाः ॥ 57.

दग्धोपि लोचनमुखेन महेश्वरस्य
कामं विवेश हृदयं पुनरेव(1.15) कामः,
एकं तु तस्य भवदाशयमात्रमेव
मन्ये महीमिहिर दुर्ग्रहमेकदुर्गम् ॥

दृष्टि(1.16)पथेन दग्धोपि कामो मन्मथो लोभश्च महेश्वरस्य चित्तं पु-नरविशत् हे महीमिहिर भूमिसू(1.17)र्य कामस्यैकमेव त्वच्चित्तमात्रमेव दुर्ग्रहं दुर्गमस्ति, भवच्चित्ते एव कामो न वर्तते इत्यर्थः ॥ (1.18) 58.

कामानुयातमरिपंचकमन्यदाहु-
स्तस्मिञ्जिते तदपि ते पुरतो वराकम्,
प्राणाहुतीकृतव(1.19)तो जलधिं महर्षे-
र्नक्रादयः क गणनास्पदतामवापुः ॥

जना अन्यदरिपञ्चकं क्रोधादिकं(1.20) कामानुयातं काममनुसरदाहुः,

1 Ms 'तीर्णं. 2 Ms 'ऽश्रमा'.

क्रोधादीनामग्रणी. काम इत्यर्थः . तस्मिन्कामेभिलाषे जिते(1 21) सति ते तव पुरतस्तत्क्रोधादिपञ्चकं वराकमकिञ्चित्करम् . अगस्त्यस्य समुद्रं पिबतो नक्रादय (1 22) जलजन्तवः के गणनीया. ॥ 59.

तत्किं ब्रवीम्युपचिकीर्षति मानसं मे
त्वा प्रत्यपीति धिगनीतिविदु(1 23*)क्तिरेषा .
प्राप्योपमन्युमुनिना किल दुग्धसिन्धुं
क्षीराभिषेककलशेन मुनिः प्रसाद्यः ॥

त्वं यतो(1 1) जितलोभस्तत्किं ब्रवीमि जल्पितुमहमशक्त इत्यर्थः. मम चित्तं तवोपकर्तुमिच्छतीत्येषानी(1 2)तिज्ञानामुक्तिः. . शिवात्क्षीरसमुद्रं प्राप्योपमन्युना मुनिना कर्त्रा शिवः क्षीरकलशेन किं प्रसाद्य ॥(1 3) यद्वा यत्त्वा प्रत्युपचिकीर्षति मे चित्तमित्येषानीतिविदुक्तिः. वस्तु नोचितमित्यर्थं प्रत्युपकार मह्य(1 1) न करोतीत्याशङ्कायामाह उपमन्युमुनिना क्षीराब्धिदोपि शिवः क्षीरकलशेन किल प्रसादनीयं (1 2). 60.

चिन्तामणेः कनकमध्यनिवेशनं य-
त्कल्पद्रुमस्य यदि वा जलसेकचिन्ता .
यत्नप्रवृत्तिरुत वा सु(1 4)रभेस्तृणानां
या स्यादुदात्तहृदयानुपकर्तुमिच्छा ॥

यदुदारचेतसामुपकर्तुमिच्छा त(1 5)च्चिन्तारत्नस्य सुवर्णमध्ये स्थापनं तथा तत्कल्पवृक्षस्य जलसेकः तथा कामधेनोस्तृणाना प्रवर्तने यत्नार(1 6)म्भः. . वाक्यार्थरूपकम् ॥ 61.

सद्भिस्तदप्युपकृतादपि कश्चिदंश-
स्स्वीकार्य एव लघुताशय(1 7)नाय तस्य .

1 Ms 'शम्भु'. 2 Is it निर ' or better, नृर ? 3 Ms कथा. 4 Ms दग्ग to 'र्दव lc at the top of page in two lines 5 Ms 'हुर', 6 Ms दशन lc on margin

नाग्राहि विश्वभयदे किल कालकूट-
व्याधौ हृते शशिकलाप्युदधेर्मृडेन ॥

यद्यप्यु(1 8)दाराश्रयाणा प्रत्युपकारार्थमसामर्थ्यं तथापि तस्योपकृतस्यां-
ऽलाघवार्थं कश्चिद्भाग कृतोप(1 9)कारात्स्वीकार्यो ग्राह्य विश्वभयधायिनि
कालकूटव्याधौ वारिते सति शिवेन समुद्राच्चन्द्रस्य क(1 10)लापि न किं
गृहीता ॥ 62.

एवं स्थिते किमपि यत्कथयामि नाम
तत्कार्यमेव भवता मदनुग्रहाय(1 11) ।
धामत्रयीनयनभासितसर्वलोकः
किं चन्द्रमौलिरपि नेच्छति दीपदानम् ॥

कृतोपकाराप्यत्यु(1 12)पकारो ग्राह्य एवं स्थिते सति यदहं वदामि
तन्मत्प्रसादार्थं त्वया कार्यमेव धामत्रयीयुक्तैर्नयनै (1 13) प्रकाशितसमस्त-
भुवनश्चन्द्रमौलिरपि दीपदान किं न काङ्क्षति ॥ 63

आकर्णयेदमनवद्य(1 14)मते मदुक्त
विद्याधरः प्रसवितास्ति शकम्भरो मे ।
अस्यामरण्यभुवि तस्य ययौ तपोभि-
र्देवी(1 15) हिमाद्रितनया नयनातिथित्वम् ॥

हेनवद्य[मते] निरहङ्कारबुद्धे इद मद्वचश्शृणु त्वम्(1 16) शकम्भराख्यो
मम पितात्रारण्यभूमावस्ति तस्य तपोभिहेतुभिरत्र देवा गौरी दृग्गोचर-
(1 17)त्व प्रापत् ॥ 64

शाकम्भरीति च पितुर्मम कीर्तिहेतो-
र्नाम स्वयं वरदया सदय तयात्तम्(1 18) ।
भागीरथीति हि पदं सुरनिर्झरिण्याः
पुण्यानि शंसति पृथूनि भगीरथस्य ॥

1 Ms पकृतस्या Is L नस्य पकृतस्या ?

सदय मम(1 19) पितु कीर्तिहेतोर्निरदया गौर्या स्वयमेव शाकम्भरीति नाम गृहीतम् गङ्गायां भागीरथी(1 20)ति नाम भगीरथस्य पुण्यानि बहूनि सूचयति ॥ 65.

> किं भूयसा सततसंनिहितामरण्ये
> ताम(1 21)त्र मज्जनयितुर्निदधुस्तपांसि .
> विद्याधरेन्द्रनगरादतिसर्वकालं
> तद्दर्शनाय करवा(1 22)णि गतागतानि ॥

बहुनोक्तेन किम् मत्पितुस्तपांसि देवीमत्रारण्ये नित्यसन्निहिता चक्रु (1 23**22) अतिसर्वकाल जातु जातु तस्या दर्शनाय विद्याधरनगराद्गमनान्यागमनानि च करवाणि ॥(1 1) 66.

> देवीप्रसादफलमत्र मयानवद्य
> पर्याप्तमाप्तमनवाप्तचरं पुरस्तात्
> नानुग्रहानभिमु(1 2)खीषु हि देवतासु
> युष्मादृशो नयनगोचरमापतन्ति ॥

पूर्वमनवाप्तचर देवीप्रसादफ(1 3)ल निर्दोष सपूर्ण पुर प्राप्तम् त्वद्दर्शनप्राप्तिरेव देवीप्रसाद इत्यर्थ.. देवतास्वेव प्रसादपरा(1 4)सु त्वादृशा दर्शन लभ्यत इत्यर्थ ॥ 67.

> तद्बाहिनीं महिषु यामवतीक्षणेत्र
> कुन्तं निवेश्य भुवि(1 5) पृष्ठमवीक्षमाणः .
> आरुह्य वाजिनमथ व्रज राजधानी-
> मेतानतीमुपकृति कुरु मे द्वितीयाम् ॥(1 6)

तत्तरमाद्धेतोस्त्व सेना विसृज त्व रात्रिक्षणे भूमौ कुन्तमायुधविशेषं

---

1 Ms गङ्गया  2 Ms 'रण्ये'  3 Ms has १ रा २७ vertically on margin
4 Ms 'टमयम' 'फल' written above मत्र  5 Ms पुर lc under 1 3
6 Ms 'मवन'

निधायाश्वमारुह्य प(l 7)श्चात्प्रदेशमपश्यन्राजधानीं गच्छेत्येतांवतीमप्रतिमश्लाघ्यामुपकृतिं कुरु मे ॥ 68.

उक्त्वेत्यदृश्य(l 8)पदवीमुपयाति तस्मि-
न्विश्वम्भरापरिवृढः प्रणिधाय सैन्यम् .
दृष्ट्वा कुलस्य परमभ्यु(l 9)दयं कृतार्थो
देवस्स्वयं द्युमणिरस्तमयं प्रपेदे ॥

एवमुक्त्वा तस्मिंस्तिरोहिते सति स भूप(l.10)तिस्सेनां व्यसृजत् स्वकुलस्य महान्तमुदयं दृष्ट्वा कृतार्थस्सन्निव सूर्यो लोकान्तरमगात् ॥(l.11) 69.

भूमिं प्रविष्टवति कुन्त इवाथ भास्व-
त्युच्चैस्तरां लवणसिन्धुरुदच्छलयत् .
तत्रास्ति कारण(l.12)लवो न हि कश्चिदन्यो
राज्ञः प्रभावमहिमा स समस्त एव ॥

यथा कुन्ते तथा भास्वति(l 13) भूमिं प्रविष्टवति सति उच्चैस्तरां क्षारसमुद्रो यदुच्छलितवांस्तत्रान्यो हेत्वंशो न विद्यते स स(l 14)र्वं एव राज्ञो [भूपतेश्चन्द्रम]सश्च प्रभावः ॥ 70.

अत्यद्भुतं किमपि कुन्तमुखेन कर्म
निर्मातुमु(l.15)त्कलिकयावतरङ्गितस्य .
वा⏑ ‒ ‒ ⏑ पृथिवीपुरुहूतबाहो-
रन्यैव काचिदुदपादि तदा(l 16) स्फुरत्ता ॥

कुन्तेन किमप्यद्भुतं कर्म निर्मातुमुत्कण्ठयेव व्याप्तस्य············
······(l 17)लोकोत्तरा स्फुरत्ता कम्पो जातः . उदपादीति कर्तरि लुङ् ॥ 71.

---

1 Ms °च्छतीव° 2 Comm right if the text is taken to be मेऽदितिर्दा, but मे दितया is better as the प्रथमा उपकृति as the restoration of the शुदिका.
3 Sic Read प्रतिकाय 4 Ms माहा°. 5 Ms चन्द्रस्य lc. on margin.
6 Restore वानेनरस्य पृ°.

वातायनादवततार ततस्तता(18)भि-
स्तत्काल आभरणदीप्तिभिरुक्तमार्गः ।
स्वैरेव लक्षणगणैर्निज एव तेज-
स्युद्दीपिता(19)भिरिव मङ्गलदीपिकाभिः ॥

ततस्स राजा वातायनादवतीर्णस्तस्मिन्काले आभरणदी(20)प्तिभि-
र्दर्शितमार्गः राजते निजैरेव लक्षणैर्निज एव तेजसि ज्वलिताभिर्मङ्गलदी-
पिका(21)भिरिवेत्युत्प्रेक्षा ॥ 72.

आयानरत्नकिरणैः कचदाननाग्रं
द्वाराग्रतो झटिति वाडवमारुरोह .(22*)
सप्तार्णवीप्रसभपानपरेण धाम्ना
कामं तले लवणसिन्धुरिपुं गृहीतम् ॥

आयाने(1) वल्गायां रत्नांशुभिर्दीप्यमानमुखं हयं स द्वारादारोहत् ॥
सप्तसमुद्राणां प्रसभं पाने(2) परेण तेजसा हेतुना राज्ञो तले गृहीतं नूनं
लवणार्णवारिं वडवाग्निम् ॥ 73.

किं भूरिभिः(3) किमिति नात्र निधिं भमूपे
लावण्यसारमसि धात्रि तमेकमेव ।
इच्छापि येन न भवत्य(4)परेष्वितीव
कुन्तेन भूमिमथ भूमिधरो बिभेद ॥

बहुभिः किं हे धात्रि येन करणभूतेना(5)न्येषु निधिषु इच्छापि न
भवति तमेकमेव लावण्येन सारेण च प्रधानं निधिं किमिति न प्रकाशय-
सीती(6)व राजा कुन्तेन भूमिं भिन्नवान् ॥ 74.

1 Ms. राजा lc. under 12. 2 'पचि दीप्ति-ज्वलने' (Dhatupatha, Bhū-adi, 196), See Notes. 3 Ms. राजा lc. under 1-3. 4 Ms. °स्यादे°. 5 Ms. °रूपेने. 6 Ms. °साले°. 7 Ms. चोच च lc. under 15.

नासापुटाननभ्रुवो भुवनत्रयस्य
संबन्धिनस्समामिव(1.7) भ्रमतस्समीरान्.
स्पर्धावशादनुगतेन ततो हयेन
प्रातिष्ठत प्रजविना नरलोकपा(1.8)लः ॥

नासापुटाभ्यामाननाश्च भूर्येषां तांस्त्रिभुवनस्य सम्बन्धिन इव समं भ्रमतो वायूनस्प(1.9)र्धावशादिवानुगच्छता वेगवताश्वेन स राजा प्रस्थानमकरोत् ॥ 75.

मध्येतमो रजसि दू(1.10)रमुदस्यमाने
रत्नांशुभिर्हरिरराजत सत्वराशिः.
द्रष्टा विमुक्तविकृतिप्रकृतिर्विशुद्धं (1.11)
स्वं पौरुषं दधदशोभत वासुदेवः ॥

तमसो मध्ये मध्येतमः अन्धकारमध्ये रजस्युदस्य(1.12)माने उत्थाप्यमाने रत्नरश्मिभिर्हयोशोभत सत्वस्य बलस्य राशिः तथा वासुदेवोशो-(1.13)भत. कीदृक् द्रष्टा पश्यन् तथा विमुक्तविकृतिः प्रकृतिर्यस्य तथा स्वं पौरुषं दधानः तथा(1.14) सत्वराशिर्धैर्यस्थानम् अथ च ह्‌·········तमोगुणे············सत्वगुणस्य(1.15)·············निर्विकारप्रकृतिः वासुदेवश्च ॥ 76.

चन्द्रोदये गगनचुम्बितया स्थितत्वा(1.16)-
द्दृष्ट्वा हयं जविनमात्मसुतभ्रमेण.
पश्चादिवागतवतो जलधेस्समीपे
कल्लोलशब्द(1.17)मवनीरमणो न्यशाम्यत् ॥

चन्द्रोदये पश्चादागतवतो लवणसिन्धोस्तरङ्गशब्दं स राजा(1.18)शृणोत्. आगमने हेतुरुत्प्रेक्ष्यते वेगवन्तं वाजिनं दृष्ट्वात्मसुत उच्चैश्श्रवा इति भ्रमेण(1.19). भ्रमः कुतो जात इत्याह आकाशव्यापित्वेन स्थितत्वात् ॥ 77.

1 Ms. ग्नि°.

तेन स्मरन्नपि वचस्स नभश्चरस्य
कौतूह(1.20)लेन बहुलेन गृहीतकर्णः .
व्यावृत्तदृष्टिरनुगत्वरमैक्षत स्वं
पानीयतामिव यशो गत(1.21)मब्धिमध्यात् ॥

तेन तरङ्गशब्देन घनेन गृहीतकर्णश्श्रुतशब्द इत्यर्थः . भवता कुन्तं भूमौ (1.22**23')निवेश्य पृष्ठं न विलोकनीयमिति विद्याधरस्य वचस्स्मरन्नपि कौतुकेन निवर्तितदृष्टिस्स राजा(1.1) समुद्रनित्यनिवासाज्जलरूपतां प्राप्तं स्वमिव यशो दृष्टवान् ॥ 78.

यावत्किमेतदिति विस्मयवा(1.2)रिराश्या-
नारायणत्वमधिरोहति तावदेव .
विद्याधरस्स पुनरेव नरेश्वरं त-
मित्थं जगाद गग(1.3)नार्णवकर्णधारः ॥

गगनार्णवे कर्णधारो नाविको व्योम्नि संचरन्स विद्याधरस्तं राजानमेवं तावद्वद(1.4)त् . एष नादः किंसंपन्न इति विस्मय एव वारिराश्या तत्र नारायणत्वं यावदाश्रयति . साश्चर्यः(1.5) इत्यर्थः . वर्तमानसामीप्ये इति लट्. अन्यश्च यावज्जले मज्जति तावत्कर्णधारः प्राप्नोति ॥(1.6) 79.

अक्रोधकुन्तकरणत्तमोदमान-
पृथ्वीपुरंध्रिघनघर्मजलायमाना .
क्षेमङ्करी रणधुरा(1.7)सुहृदां दयानां
राजन्नियं लवणसिन्धुरवातरत्ते ॥

तवाश्वानां हितेयं लवणसिन्धुरवतीर्णा. नखक्षतेन च वनिताया घर्मज-लोद्भेदः ॥(1.10) 80.

यन्नाम किञ्चन पतिष्यति वस्तुजातं
क्षारत्वमेष्यति तदत्र समस्तमेव .
तेनाचरिष्यति न केव(1.11)लमेव कीर्त्ते-
र्यावत्प्रतापदहनस्य तवानुवृत्तिम् ॥

यत्किञ्चन स्वादुकटुकादि वस्तुजातमिह(1.12) लवणसमुद्रे पतिष्यति तत्सर्वं कर्तृ क्षारत्वं लवणत्वमेति यत्तेन हेतुना न केवलं त्वत्कीर्त्तेरेवा(1.13)यं लवणाम्भा अनुवृत्तिं करोति. त्वत्कीर्तिं शृण्वतामन्ये वृत्तान्ताः क्षारा इत्यर्थः यावत्प्रतापाग्नेरप्ययं(1.14) लवणा·········नुवृत्तिं करोति दाह·······
······कीर्तेरतिमाधुर्यादन्येषां वृत्तान्ताः क्षारा इवेत्यर्थः ॥ (1.15) 81.

इन्दोः कुलस्य यशसां वसतिः कुरूणां
क्षेत्रं पवित्रयति योजन[पञ्चकं तत्] .
लोकान्तरे फलति(1.16) तत्फलवाननेन
लोकद्वयेपि भविता सवितुस्तु वंशः ॥

इन्दोः कुलस्य·········नां कुरूणां [वत्संव](1.17)न्धिनां यशसां वसतिः स्थानं यत्क्षेत्रं कर्तृ योजनपंचकपरिमाणं लोकं पवित्रयति तल्लोकान्तरफलं द[दाति] (1.18). तुः पक्षान्तरे. अनेनं परिमाणेनेत्यर्थः लवणसमुद्रेण तु सूर्यस्य कुलं सूर्यवंश्या राजानो लोकद्व(1.19)ये फलवन्तो भवन्ति. अयमर्थः कुरुक्षेत्रमृताः कुरवस्स्वर्गमात्रं लब्धवन्तः सूर्यवंश्यानां तु लव(1.20)णाम्भा इह परत्र च फलप्रदः ॥ 82.

तदेव लोकद्वयफलदानं दर्शयति ॥

---

1 Ms. °त्सर्वं°. 2 Ms. °वेय°. 3 Ms. त्वत्की°. 4 Ms. °न्नाना°.
5 Ms.° त्रिस्या°. 6 Ms. °नाप°. 7 Ms. °मुर्व°.

यः पूर्वपुंभिरु(1 21)द्खन्यत तावकीनै-
रेकोपि तृप्तिमुपयाति न वाडवोस्मात् .
प्रीतिं विधातुमखिलेष्वपि [वाडवे](1 22*)षु
जातस्त्वदन्वयभुवां लवणाकरोयम् ॥

त्वदीयैः पूर्वपुरुषैस्सगरैर्यस्समुद्रः प्रागुत्खातस्तस्मादे(1 1)कोपि वाडवो वडवाग्निर्न तृप्तिमेति त्वत्कुलजातानां संबन्धिषु वाडवेष्वखिलेषु तृप्तिं कर्त्तुमयं त्वत्खातो लवणस(1.2)मुद्रो जातः ॥ 83.

आशापुरीति नृपते कुलदेवता ते
शाकम्भरी भगवती च मयि प्रसन्ना .
एते द्युसिन्धुय(1 3)मुने इव सर्वकालं
रक्षिष्यतो लवणवारिनिधिं मिलित्वा ॥

राजन्नाशापुरी नाम देवी तव कुलदेव(1 4)ता भवति. शाकम्भरी देवी च मयि प्रसन्ना भवति एते गङ्गायमुने इव मिलित्वा लवणाब्धिं रक्षिष्यतः ॥(1 5) 84.

आविर्भविष्यति विना भवदन्वयाय-
मन्यस्य कस्यचन नैष रसो नृपस्य .
और्वाग्निधूमभवमभ्रगणं हि(1 6) हित्वा
पातुं न कोपि तृषितः क्षमते पयोधौ ॥

भवत्कुलं विनान्यस्य कस्यापि राज्ञोयं लवणाम्भा न प्र(1.7)कटीभविष्यति . संभावनायां लृद् . वाडवधूमजातं मेघकुलं त्यक्त्वा को नुं तृषितस्समुद्रे पातुं सम(1.8)र्थः . हित्वेति क्त्वाप्रत्यय·····················॥ 85.

---

1 Ms. °त्यन्ता. 2 Ms. °ष्यिवा°. 3 Ms त्वत्खातो le at the top of page, 4 Ms. °मद°. 5 Is it कोन्यस्त्°?

किं भूयसा स्फटिकशैल इवा(l 9)ष्टमूर्त्ति-
शिलावलेन परिकल्पिततोयमूर्त्तिः .
अभ्यागतश्चरणयोस्तलमद्य यस्याः
श्शाकम्भरीति गि(l 10)रिजा तव सेयमग्रे ॥

बहुनोक्तेन किम्. अष्टमूर्त्तेस्सकाशाच्छिन्ना सम्प्रदायस्तद्बलेन परिक-ल्पित(l 11)जलरूप स्फटिकाद्रिरिव यस्याः पादतलमागतोद्य सेयं शाक-म्भरी देवी तवाग्रे भवति ॥ 86.

एतां प्र(l 12)णम्य शिवशेखरचन्द्ररेखा-
मन्दाकिनीशिशिरपादयुगामिदानीम्.
निर्वापिताध्वगमनक्लमस(l 13)न्निपातः
पृथ्वीपुरन्दर पवित्रय राजधानीम् ॥

शिवस्य शेखरीभूते ये चन्द्रलेखामन्दाकिन्यौ तद्वत्ता(l 14)पहरपादद्व-यामेतां गौरीं प्रणम्य शमितमार्गतापज्वरस्त्वं राजधानीं गच्छ ॥ 87.

उक्त्वेति विस्म(l 15)यसुधारसवर्षमेघो
बद्धाञ्जलिः प्रति[मुमोच सरी]⏑–– .
राजापि तूर्णमव[रुह्य हयाद]यासी(l 16)-
–⏑⏑–⏑⏑⏑–[परी]क्षकत्वम् ॥

विस्मय एव सुधारसस्तस्य वर्षे मेघस्स विद्याधर इ(l 17)त्युक्त्वा ब-द्धाञ्जलिस्सन्प्रैत्यमुञ्चत्. राजा च सद्योऽश्वादवरुह्याचम्य सलिलस्य परीक्षा-मकरोत्(l 18) पुण्य प्राप्तवान्पानादिनेत्यर्थ ॥ 88.

अथ शिवशिरश्चन्द्रज्योत्स्नाललाटविलोचन-
ज्वलनसततप्रत्या(l 19)सत्तिप्रभावकवोष्णयोः .

---

1 Ms भूयया 2 Ms परफ°. 3 See Canto XII 14, 49.

उपचितयशस्तेजाश्शाकम्भरीचरणाब्जयो-
रनतिनिकटे नीत्वा रात्रिं प्रगे न(120)गरीमगात् ॥

शिवस्य शिरसि चन्द्रज्योत्स्ना तथा ललाटे विलोचनाग्निः तयोर्नित्यं प्रत्यासत्तिस्तत्प्रभावेन(121) कवोष्णयोः । शिवो नित्यं शाकम्भरीं प्रणमतीत्यर्थः. शाकम्भरीपादयोरनतिसमीपे··············(1.22)··········· राजोपचिते यशस्तेजसी यस्य स तथा सम्प्रातर्नगरीं गतः । यशस्तेजसोरुपचये कवोष्ण(1.23**24¹)देवीपादतलवासस्संभावित इति भद्रम् ॥ 89.

श्रीलोलराजसुतपण्डितभ(11)ट्टनोन-
राजात्मजो विवरणेन चतुर्थसर्गम् ।
दुर्गं सुबोधमकरोदिह जोनराजः
पृथ्वीमहे(12)न्द्रविजयाभिधकाव्यराजे ॥

पृथ्वीराजविजये चतुर्थस्सर्गः ॥

---

1 Ms. 7 ll. vertically on margin.

## [ पञ्चमः सर्गः ]

लव(1 3)णाकरमाकर्ण्य स्ववंश्येनावतारितम् ।
रथाश्वानामिव प्रीत्यै ससाश्वो द्रुतमाययौ ॥(1 4)

स्ववंश्येन वासुदेवेनावतारितमुत्पादितं लवणसमुद्रं श्रुत्वेवाश्व[प्री]त्यर्थ-मिव सप्ताश्वस्सूर्यो द्रुतमु(1 5)दितः ॥ 1.

शापं दशरथोप्यापदर्कवंश्यो मृगव्यया ।
अवाप्तानुग्रहो राजा स पुनः प्राविशत्पु(1 6)रीम् ॥

सूर्यवंश्यो दशरथोपि आखेटिकया शापं प्रापत् स तु राजा सूर्यवंश्यो मृगव्यया(1.7) लब्धप्रसादो नगरीमविशत् ॥ 2.

शाकम्भरीप्रदेशे यदुदगुस्तस्य कीर्तयः ।
अतो नोद्वे(1 8)गमाजग्मुः पुलिने लवणोदधेः ॥

शाकम्भरीप्रदेशो मरुभूमित्वात्क्षारः । तत्र यत्त(1 9)स्य यशांसि जातानि अतः क्षाराब्धितटे तानि नोद्वेगमागतानि. क्षाररससात्म्यादिति भावः॥(1.10) 3.

लवणाम्भोनिधेस्स्वामी क्षीराम्भोधिनिवासिनः ।
क्रमात्स वासुदेवस्य वासुदेवोन्तिकं ययौ ॥(1 11)

क्षीराब्धिवासिनो वासुदेवस्य निकटं स वासुदेवो राजा गतः । लवणाम्भोनिधेः(1 12) स्वामीति समीपगमनौचित्यार्थम् ॥ 4.

---

1 Is the text 'द्रुष्टो'? 2 Valmiki, II 63-64, Raghu, IX. 74-81.
3 Ms 'श्वाम्बो'. 4 Ms. 'पाम्बोधे'

भुवं शाकम्भरीदेव्या सनाथां यदुपासते ।
तद्वंश्या(1.13)स्तेन भण्यन्ते सर्वे शाकम्भरीश्वराः ॥

शाकम्भरीपालितां भूमिं वासुदेवकुलजा यत्सेवन्ते(1.14) तत[स्ते शाक]-म्भरीश्वराः कथ्यन्ते ॥ 5.

उ[त्तुङ्गै]— ⌣ —[भास्व]न्मित्रैरहितवर्जितैः ।
राजचन्द्रैरनन्ता भूः(1.15) समराजि महोत्सवैः ॥

तै राजचन्द्रैरनन्ता भूमिर्न·················अपि·········(1.16)-त्यर्थः महान्त उत्सवा येषां तैरुत्तुङ्गैरुदारैः भास्वन्ति दीप्तानि मित्राणि शत्रुरहितैः(1.17). सर्वपदाश्रयः पुनरुक्ताभासः । उत्तुङ्गादीनां सर्वेषां पदानामामुखे पुनरुक्तत्वात् ॥(1.18) 6.

जज्ञे तदन्वयोदन्वत्सुधांशुर्वसुधापतिः ।
सामन्तराजस्सामन्तराजिकैरविणीरविः ॥(1.19)

वासुदेववंशसमुद्रचन्द्रो मंडलेश्वरपङ्क्तिकुमुदिनीसूर्यस्सामन्तराजनामा [जज्ञे] (1.20) । छेकानुप्रासः ॥ छेकाः पत्तिविशेषास्तद्वारगुपलक्षितोनुप्रासः वृन्द················(1.21)कानामावृत्तेः ॥ 7.

सुपुवे जयराजं तं राजन्तं स जयश्रिया ।
यं वीक्ष्याजौ विव[स्वन्तं वस्वन्तं भा](1.22*)प राजकम् ॥

विवस्वन्तं सूर्यसमं यं दृष्ट्वा रणे राजगणश्चन्द्रगणश्च वस्वन्तं तेजोनाशं प्राप तं जयलक्ष्म्या शो(1.1)भमानं जयन्तराजनामानं पुत्रं स प्रापत् ॥ यमकं । तुल्यरूपयोस्समुदाययोरावृत्तेः ॥(1.2) 8.

नितान्तमुन्नतिमतो नेतुमानतिमाततताम् ।
तेने तेन नताग्रेतुमुन्नतिं मानिना मतिः ॥

---

1 Ms. °त्या. तै°. 2 Ms. °न्द्रै°. 3 Ms. °सदि°. 4 Ms. °हितैः°. 5 Ms. °रा.°

तेन मानिना(1.3) जयराजेनोन्नतिमत उद्धतान्नतिं नेतुं नमयितुं तथा नतान्प्रणमत उन्नतिं नेतुं वर्धयितुं निता(1.4)न्तं मतिः कृता ॥ त्र्यक्षरो वृत्त्यनुप्रासः ॥ नकारतकारमकाराणां त्रयाणामावृत्तेः ॥(1.5) 9.

नतेनतेतेन तेन तेन तेन नतेन ते.
नते नते तेन तेन ते नते न नते नते ॥ 10.

इति स्तुतं कविवरैर्मुख्यं स(1.6)र्वमहस्विनाम्.
प्राप विग्रहराजं स ग्रहराजमिवात्मजम् ॥

नतेति निष्ठान्तं स्त्रीलिङ्गं प्रथ(1.7)मैकवचनं क्रियापदम्. इनतेति कर्मपदम्. इतेन तेनेति कर्तृविशेषणम्. तेन तेनेति कर्तृपदम्.(1.8) नतेनेति च कर्तृविशेषणम्. ते इति तच्छब्दस्य जसन्तस्य रूपम्. इति पूर्वार्द्धे पदविभागः. नते न(1.9)ते इति सप्तम्येकवचनान्तं पदद्वयम्. तेन तेनेति च तृतीयान्तम्. ते नते इति द्विवचनान्तं कर्तृप(1.10)दम्. नेत्यव्ययम्. नते नते इति द्विवचनान्तं पदद्वयम् ॥

तेन तेन पुरुषेण कर्त्रा ते तव सम्ब(1.11)न्धिनी इनता ऐश्वर्यं नता सर्वैस्त्वदैश्वर्यप्रणामः कृत इत्यर्थः. पुरुषेण कीदृशेन इता प्राप्ता(1.12) इनता स्वाम्यं येन तथा नमता. इति प्रथमार्धव्याख्येयम्. ते नते कर्त्र्यौ नते नते न भव(1.13)तः उन्नते उन्नते भवत इत्यर्थः ता लक्ष्मीः इनता स्वाम्यम् कस्मिंस्तेन तेन हेतुना नते नते प्रणा(1.14)मं कुर्वति पुरुषे ॥ सर्वतोभद्रम् ॥ चित्रमिदं खड्गादिसंनिवेशहेतुवर्ण(1.15)···············॥··················
···[कवी]न्द्रैः स्तुत···············स्विषु प्रधानं ग्रहराजं सूर्यमिव स राजा विग्रह(1.16)राजाख्यं पुत्रं प्रापत् ॥ 11.

यस्य खड्गाद्विनिर्गत्य गङ्गयेव हरेः पदात्.
कीर्त्या त्रैलोक्यपावन्या(1.17) लङ्घिता गिरिसागराः ॥

·1 Ms पृथ्व°· ··· °भानप्र°·

विष्णोः पदादिव यस्य खड्गाद्विनिर्गत्य गङ्गयेव त्रिभुवनस्य पावन्या (1.18)कीर्त्या पर्वतसमुद्रा लङ्घिताः ॥ 12.

दूरस्थाप्यरिवक्त्रेषु बभौ यत्खड्गकालिका .
कलङ्कश्यामि(1.19)का चान्द्री शतपत्रवनेष्विव ॥

यत्खड्गस्येव कालिका शत्रुमुखेषु बभूव . कदाचित्सैव स्यादि(1.20)-त्याह दूरस्थापि दूरादेव प्रतापभयात्पलायमानानां द्विषां मुखकान्तिहीनात-.स्संभाव्यते ख(1.21)[ड्ग]श्यामिकेव लक्ष्मेति . का केष्विव . पद्मवनेषु चान्द्रीव कलङ्कश्यामिकेव ॥

उपमाद्वयम् ॥(1.22**25)सर्वमहस्विनां मुख्यमिति साधारणधर्मस्य सद्भावात् उपमानभूतेन महराजेना(1.1)पि साधारणधर्मस्योपमेयवत्संब-न्धात् . खड्गपादयोर्बिम्बप्रतिबिम्बभावात् . कालिकाश्यामि(1.2)कयोः पर्यायनिर्देशात् ॥ 13.

यशोभिर्यस्य वर्षान्ते दुर्यशोभिश्च वैरिणाम् .
मिलितैर्हंसकाद(1.3)म्बैरिव दिद्युतिरे दिशः ॥

वर्षाणामन्ते मिलितैर्हंसैः काकैश्च यथा दिशश्शोभन्ते तथा तद्यशो-(1.4)भिश्शत्रुदुर्यशोभिश्च दिशोशोभन्त ॥ समुच्चयोपमा ॥ हंसकाकानां यशो-पयशसां च समका[लं](1.5) दिशां द्योतनात् ॥ 14.

तनयश्चन्द्रराजोस्य चन्द्रराज इवाभवत् .
संग्रहं यस्सुवृत्तानां सुवृत्तानामि(1.6)व व्यधात् ॥

चन्द्रराजाख्यश्चन्द्रो ग्रंथकारस्य इवास्य पुत्रः चन्द्रराजाख्योभवत् शो-भमानां वृ(1.7)त्तानां वसन्ततिलकादीनामिव सुवृत्तानां सदाचाराणां पुरु-षाणां यत्संग्रहमकरोत् ॥ (1.8)श्लेषमिश्रोनन्वयः ॥ चन्द्रराजस्य चन्द्रराजे-

---

1 Ms. '[illegible]'. 2 Ms. [illegible] 3 Ms. '[illegible]'. 4 Ms. '[illegible]',
5 Ms. '[illegible]'. 6 Ms. [illegible] 7 Ms. '[illegible]'. 8 Ms. [illegible] 9 Ms. '[illegible]'.

नैव सुवृत्तानां सुवृत्तैरेवोपमानात् तेनैवो(1.9)पमानत्वेनन्वयस्य सद्भावात् ॥ प्राकरणिकाप्राकरणिकत्वं न विचार्यम् ॥ 15.

सर्वभूतोपयोगित्वात्सर्वथा हृदयंगमा ।
क्षमेव दयि(1.10)ता तस्य दयितेव क्षमाभवत् ॥

उपकारपरत्वेन सर्वभूतानामुपयोगित्वात्सर्वथा मनोह(1.11)रा दयिता दयावत्वं प्रिया च क्षमेव भूरिव क्षान्तिरिव चाभूत् क्षमा दयितेवाभवत् ॥ (1.12) श्लेषमिश्रैवोपमेयोपमा ॥ क्षमादयितयोरन्योन्यमुपमेयोपमानत्वात् तस्याश्च पर(1.13)स्परमुपमानोपमेयत्वलक्षणवत्वात् ॥ 16.

तस्य गोपेन्द्रराजोभूदनुजो यो मनीषिणाम् ।(1.14)
गोपेन्द्रराजस्मृतिकृद्गोमण्डल[धृतेरभूत्] ॥

गोपेन्द्रराजाख्यस्तस्यानुजोभूत् यो गोमण्डल(1.15)स्य भूवलयस्य धेनुवर्गस्य रश्मिचक्रस्य वा धृतेर्धारणाद्गोपेन्द्र[स्य कृष्णस्य] राज्ञश्चन्द्रस्य च स्मा(1.16)रयिताभूत् ॥ श्लेषेण स्मरणम् ॥ गोधारणेन कृष्णेन्दुसमस्य राज्ञोनुभवात्कृष्णचन्द्र(1.17)स्मरणम् ॥ 17.

ततो दुर्लभराजेन चन्द्रराजस्य सूनुना ।
विनोदकेन गमिता वृद्धिं कीर्त्तिल(1.18)ता भुवि ॥

चन्द्रराजपुत्रेण दुर्लभराजेन विनोदकेन प्रजादुःखहारिणा कीर्त्तिरेव लता भुवि वर्धि(1.19)ता । उदकेन विना लतावर्धनात्प्रतीयमानविरोधः ॥ निरङ्गरूपकम् ॥ भिन्नयोस्सामाना(1.20)धिकरण्येन निर्देशे रूपकसद्भावात् निरङ्गं कीर्त्तौ लतारोपस्यारोपान्तरनिरपेक्षत्वात् ॥(1.21) 18.

यस्य कैरविणी व्योम्नि पृथिव्यां तारकावली ।
पाताले चन्द्रिका कीर्त्तिः कं न चक्रे सविस्मयम् ॥

---

1 Ms. श' to 'यंम्' lc. under. l.9. 2 Ms. 'णाद्गो'.

[था](1.22*)काशे कुमुदिनी तथा भूमौ तारापङ्क्तिस्तथा पाताले ज्योत्स्ना यस्य कीर्तिस्सर्वजनं साश्चर्यमकरोत् ॥(1.1) निरङ्गं मालारूपकम्, एकस्मिन्विषयेऽनेकेषामारोप्यमाणत्वात् निरङ्गं चारोपान्तरनिरपेक्ष(1.2)-त्वात् ॥ 19.

असिः स्नातोत्थितो यस्य गङ्गासागरसङ्गमे.
चिरं गौडरसास्वादशुद्धां ब्राह्मणतां ययौ ॥(1.3)

गंगासागरसङ्गमे पूर्वं स्नातोऽनन्तरमुत्थितो यस्यासिर्गौडानां जानपदविशेषाणां रसाया भूमेरा(1.4)स्वादे शुद्धां तत्र ब्राह्मणस्य भावं प्राप्तः. गौडरसो गुडसम्बन्धी रसश्च यद्वा शुद्धां प्रधानो ब्राह्मण इति(1.5). केवलं श्लिष्टं परम्परितम् ॥ असौ ब्राह्मणारोपस्यान्यारोपं गौडरसं प्रति सापेक्षत्वात् ॥(1.6) 20.

प्रजापतिपदब्रह्मा पाड्गुण्यपुरुषोत्तमः.
सुतो गोविन्दराजोऽस्य शक्तित्रयमहेश्वरः ॥

प्रजा(1.7)पतिपदं राज्यं स्रष्टृत्वं च तत्र ब्रह्मा षड्गुणास्सन्धिविग्रहादयो ज्ञानादयश्च तेषु पुरुषोत्तमो वि(1.8)ष्णुः शक्तयः प्रभुत्वादय इच्छादयश्च तत्र महेश्वरः ॥ मालारूपकं तदेव ॥ ब्रह्म(1.9)शब्दादीनामारोपाणां प्रजापत्यादीनारोप्यान्प्रति सापेक्षत्वात्परम्परितम् ॥ 21.

नयन्म(1.10)न्मथमुन्मारामात्मभूतरिसायस्य च.
द्वितीयश्चन्द्रराजोऽभूचनोरिध्वान्तचन्द्रमाः ॥

सर्वराजार्कजीमूतस्सर्वदिग्वल्लरीमधुः ।
गोवाकस्तत्सुतस्सर्वद्वीपमण्डलयामिकः ॥(1.14)

सर्वे राजान एवार्कास्तेषां जीमूतः सर्वदिश एव वल्लर्यस्तासां मधुर्वसन्तः सर्वद्वीपा ए(1.15)व मण्डलं तत्र यामिकः ॥ मालारू[पकम्] ॥ एकस्मिन्ननेकेषामा[रोपाणामारो]प्यमाण(1.16)त्वान्माला[रूपकं परस्प]रसापेक्षारोपत्वात्परम्परितम् ॥ 23.

उपायवेदसर्वज्ञो गु(1.17)णषट्कर्मपारगः ।
राजर्षिरेष मन्त्राङ्गशिखिपञ्चकमध्यभाक् ॥

उपायास्सामादय(1.18)स्त एव वेदास्तेषु सर्वज्ञः गुणास्सन्ध्यादय एव षट्कर्माण्यध्यापनादीनि तेषां पारगः म(1.19)न्त्राङ्गानि कर्मणामारम्भोपाय इत्यादीनि एव शिखिनोग्नयस्तेषां पञ्चकं तन्मध्यभाक् एष(1.20) राजर्षिर्भूत् ॥ प्रकृतोपयोगि राजर्षेर्विशेषानुगुण्यात् ॥ 24.

प्रताप(1.21)तपनोपास्तिप्राप्तकीर्तिकलागमः ।
कृपाणकृष्णसारेण पूर्णो राजा रराज यः ॥

कृपा(1 22)[ण] एव कृष्णसारस्तेन पूर्णो यो राजा रराज कीदृक् प्रताप एव तर्पनस्सूर्यस्तस्योपास्ति(1.23··26)रुपासनं तया प्राप्तः कीर्तिकलानामागमो येन सः राजा चन्द्रश्च तपनसेवया प्राप्तकलाग(1 1)मो मृगाङ्कश्च भवति ॥ श्लिष्टमेकदेशविवर्ति । अर्थावसेयारोपत्वादेकदेशविवर्ति॥(1.2) श्लिष्टं तु राजशब्दस्योभयार्थवाचित्वात् ॥ 25.

मलस्य मानससरो विकारस्य पयोर्णवः ।
अव्या(1.3)मगगनं यस्य यशः कैर्नाम लङ्घ्यते ॥

मलस्य मालिन्यस्य मानससरः यद्यशो नि(1.4)र्मलमित्यर्थः तथा

---

1 Ms. 'षमा'. 2 Ms. 'र्वेत्वे'. 3 Ms. 'षः कृ'. 4 Ms. 'द्यारे'.
5 Ms. तप', 6 Ms. has पृ. वि. on margin. 7 Ms. 'पायर्न.
8 Ms. 'प्रर्का'. 9 Ms. त्रिविधास्य( i.e. त्रिविधस्य) crossed before म'.

विकारस्य क्षीरसमुद्रः निर्विकारमित्यर्थः अव्याप्तेर्गगनं व्यापकमित्यर्थः य-(1.5)स्य यशः कैर्लंघ्यते ॥ आरोप्यमाणानां मानसादीनामलंघ्यत्वात् कैर्लंघ्यते इत्युक्तिसंगतिः ॥(1.6) वैधर्म्येण निरंङ्गं मालारूपकम् ॥ मलादीन्प्रति मानसादीनां प्रतिकूलत्वाद्वैधर्म्यम् ॥(1.7) 26.

अयशोमेघशरदा दुरितध्वान्तराकया .
यस्य श्रिया प्रमादाहिहेमन्तनिशया जितम् ॥

यस्य श्रि(1.8)या जितमिति भावे क्तः . अयश एव मेघस्तस्य शरदा तथा पापान्धकारपौर्णमास्या तथा प्रमाद(1.9)सर्पस्य हेमन्तरात्र्या . शीतकाले सर्पाणां विलप्रवेशेनादर्शनाद्धेमन्तनिशारूपकम् ॥(1.10) परम्परितं तदेव मेघादीन्प्रति शरदादीनां प्रातिकूल्यात् ॥ 27.

समुद्राः स्थिरलावण्याः(1.11) परकर्णभिदोर्जुनाः .
यशसां राशयो यस्य दिवि वर्द्धपदश्रवाः ॥

स्थिरं लावण्यं लालित्यं च(1.12) येषां सम्यगुचैः रान्तीति च परेषां शत्रूणां कर्णं श्रवणं परं शत्रुं राधेयं च भिन्दन्ति अर्जुनाः(1.13) श्वेताः पाण्डवविशेषश्च दिवि व्योम्नि च कृतस्थितयोधवा दक्षास्ताराविशेषाश्च . अर्जुनाः श्वेता इ(1.14)ति बहुवचनं विषयाणां प्रत्येकमारोपात् ॥ आविष्टलिङ्गं रूपकम् ॥ 28.

पुण्डरीकं विरि(1.15)ञ्चस्य श्वेतद्वीपं [मुर]द्विषः .
चन्द्रापी[डस्य कैलासं य]श्शुद्धयवदन्मनः ॥

मङ्कादीनां पद्मादि य(1.16)श्चित्तमधारयत् तत्र तेषां नित्यनिवासात् ॥ परिणामः ॥ 29.

---

1 Ms. निर्वि. 2 Ms. [illegible] 3 Ms. [illegible] 4 Ms. [illegible]
5 Ms. [illegible] 6 Ms. [illegible] 7 Ms. [illegible] 8 Ms. [illegible]

तेजोबलाद्व[ादशभिः सूर्यव]न्महदा(1 17)यिभिः ।
भूपैरभ्यर्थ्यमानत्वे स्वसारं यः कलावतीम् ॥ 30.

चन्द्रमूर्त्तिभ्रमकरीं मुखलक्ष्म्येव संज्ञया ।(1 18)
कान्यकुब्जमहेशाय सरस्वानिव दत्तवान् ॥

तेजस्वित्वात्सूर्यसमैर्द्वादशभिर्भूपालैर्याच्य(1 19)मानत्वेपि कलावतीं कलावतीनामानं चतुष्षष्टिकलासहितां च स्वसारं यः कान्यकुब्जेन्द्रा(1 20)य दत्तवान् मुखकान्त्या कलावतीति सञ्ज्ञया च चन्द्रभ्रान्तिकरीम् ॥ भ्रान्तिमान् ॥ क(1 21)लावतीति वचनेन भ्रान्तिजननात् ॥ 31.

जितैः प्रदत्तसर्वस्वस्वस्वे द्वादशभिर्नृपैः ।
यमो(1 22*) धनपतिर्वायं संदेहमिति यो ददौ ॥

युद्धे जितै राजभिर्हेतुभिः स्वस्वे प्रदत्तं सर्वस्वं येन स यो राजा(1 1) किं यमः किं वा वैश्रवण इति संदेहं दत्तवान् ॥ राज्ञां पीडनाद्यमः अतिदानाद्धनदः ॥ शुद्धस्स(1 2)न्देहः ॥ सन्देहे एव पर्यवसानात् ॥ 32.

नन्दनश्चन्दनस्तस्य यस्य नामन्युदीरिते ।
जनस्सफ(1 3)ल इत्युक्तिशेपाद्वृत्तभ्रमं जहौ ॥

चन्दन इति यस्य नामन्युक्ते सति तत्सन्देहं प्राप्तुवंल्लोकः(1 4) तत्स्सफल इत्युक्तिशेपाद्वृत्तभ्रममत्यजत्. चन्दनवृक्षस्य फलानामनुत्पत्तेः ॥ निश्चया(1 5)न्वः ॥ प्रथमं संशये सति निश्चये संपर्यवसानात् ॥ 33.

फलदश्चन्दनो दृष्टो भोगिनो यमु(1 6)पासते ।
सत्कलास्ते च तेषां च विपदं वदनं सदा ॥

चन्दन इत्युक्ते संशयः फलद इत्युक्ते निश्च(1 7)यः चन्दनस्य फलदत्वाभावात् भोगिनः सुखिनश्च यं सेवन्ते इति सन्देहः ते च भोगिनः सत्कलाः

1 Ms रु'; or नृपे' ? 2 Ms 'तिरु'. 3 Ms. 'ण' written above 'म'. 4 Ms. र्यो. 5 Ms. निश्चे'. 6 Ms. 'दर्श'.

विधया···(1 8)···श्रुतयः सद्वृद्याश्चेति निश्चयः वेषां भोगिनां मुखं विषदं प्रसन्नं विषोद्गारकं चेति सन्देहः ॥(1 9) निश्चयगर्भः ॥ प्रथमं सन्देह, मध्ये निश्चयः पश्चात्सन्देहः ॥ 34.

इत्यादि वर्णनं यस्य(1 10) मिलत्संदेहनिश्चयम् ·
न वृक्षः कल्पवृक्षोयमित्युक्त्वावेति सङ्गतिम् ॥

संशयनिश्चयसंकी(1 11)र्णं यस्यैवं वर्णनं सङ्गतिमेति सङ्गच्छते. कदा अयं राजा वृक्षो न भवति किं तर्हि कल्पवृक्षो भव(1 12)तीत्युक्तौ सत्याम्. कल्पवृक्षे पूर्वोक्तस्य सफलत्वादेर्विशेषणजातस्य संभवात् ॥ नि(1 13)श्चयान्तस्सन्देहः अन्तनिश्चयस्य लाभात् ॥ 35

बभार न स राजत्वं राजराजत्वमेव तत् .(1 14)
अन्यथा निधयः सर्वे कथमायत्ततां ययुः ॥

इतरराजवत्स राजा राजत्वं नावहत्किन्तु तत्त(1 15)स्य राजत्वं राजराजत्वमेव भवति. राज्ञां राजा राजराजः वैश्रवणश्च. अन्यथा यदि स राज(1 16)राजो न [स्यात्तर्हि कथं सर्वे निध]यस्तस्यायत्ततां जग्मु. [राजरा]जस्यैव निधि[पतित्वा]त् ॥(1 17) प्रथमापह्नुतिः ॥ विषयस्य निषेधेन्यस्य विधानात् निषेधपूर्वमारोपात् ॥ 36.

रुद्राणी(1 18) तद्वधूर्दीपसहस्रं तमसो भिदे ·
न पुष्करतटे लिङ्गसहस्रं तददीदिपत् ॥

रुद्राणी नाम(1 19) तद्वधूः पुष्करतटे तमोहरणार्थं तद्दीपसहस्रमज्वलयत् न पुनस्तल्लिङ्गसहस्रमज्वलयत् ॥(1 20) द्वितीयापह्नुतिः ॥ आरोपपूर्वकं निषेधस्य सद्भावात् ॥ 37.

---

1 Ms. श्रुत्य. lc. on margin. 2 Ms. Sic; i. e., विषद. 3 Ms. 'दत्त'.
4 Ms. 'र्ण'. 5 Ms. नव. See. p. 103, l 6. 6 Ms. 'र्ण'.

योगिन्यात्मप्रभाख्यासावखि(1.21)माद्यष्टकच्छलात् .
अपश्यत्फलितां स्थाणावहिंसाद्यष्टपुष्पिकाम् ॥

आत्मप्रभा नाम सा(1 22) योगिनी स्थाणौ परमेश्वरविषयामहिंसादिमेवाष्टपुष्पीं फलितामज्ञासीत् कस्माद(1.23)[हिंसा]दि यदष्टकं तद्रूपात् ॥ तृतीयापह्नुतिः॥ असत्यत्वप्रतिपादकेन च्छलश(1 24**27)ब्देन निर्देशात्॥ 38.

रुद्राणीति पुरंध्रीभिर्योगिनीति च योगिभिः .
आत्मप्रभेति सा ज्ञाता विशन्त्यर्कस्य(1.1) मण्डलम् ॥

पुरन्ध्रीप्रभृतिभिस्सा रुद्राण्यादित्वेनोल्लिखिता ॥ उल्लेखः ॥ एकस्या अनेकधा क(1.2)ल्पनात् ॥ . 39.

सूनुर्वाक्पतिराजोस्य प्रसाद इव मूर्त्तिमान् .
हिताय सर्वलोकानामुदपद्यत शा(1.3)म्भवः ॥

लोकानां हितार्थं मूर्तो हरप्रसाद इव विग्रहराजोस्य पुत्रो जातः ॥ गुणोत्प्रेक्षा ॥(1.4) प्रसादाख्यो गुणो विषयित्वेन सम्भावितः ॥ 40.

स भुजाभ्यां जयान्प्रापदष्टाशीत्यधिकं श(1.5)तम् .
बुद्ध्या निर्मलया कालं कामं च मनसाजयत् ॥

स जयानष्टाशीत्यधिकं शतं भुजाभ्यां(1 6) प्रापत् . स शुद्धया बुद्ध्या कालं निर्मलेन च मनसा काममजयत् इति नवत्यधिकं शतं प्राप्तम् ॥(1 7) 41.

गणनां सूचयन्तीव जयानामिति यत्र ताः .
धामत्रयीकला वक्त्रपंचके पंचधा स्थिताः .

य(1 8)त्र वर्तमानानां जयानां नवत्यधिकं जयानां शतमिति संख्यां पंचवक्त्रस्येश्वरस्य मुखपञ्चके(1 9) स्थिता धामत्रयीकलास्सूचयन्ति .

1 Ms. has प. वि. vertically on margin. 2 Ms. °दया. 3 Ms. भामयी°.

चन्द्रकलाष्षोडश सूर्यकला द्वादश वह्निकला दशेति(l.10)प्रतिवक्त्रमष्टात्रिंश-द्भवन्ति अष्टात्रिंशत्संख्यास्ता धामत्रयीकलाः पंचमुखस्येश्वरस्य प्रतिमु(l.11)खं वर्तमानत्वात्पञ्चभिर्गुणिता भवन्तीति नवत्यधिकं शतं भवन्तीति क्रियोत्प्रेक्षेयम् सूचनाक्रि(l.12)यायास्संभावनात् ॥ 42.

तं प्रासादमसौ चक्रे पुष्करे व्योमवाससः .
भक्त्या त्यक्तोत्तरासंगः कैला(l.13)स इव भाति यः ॥

असौ राजा पुष्करतीर्थे हरस्य तं प्रासादं चक्रे यो भक्त्या त्यक्तोत्त-रासंगः कैला(l.14)स इव भाति . त्यक्तोत्तरादिक्संगश्च ॥ द्रव्योत्प्रेक्षा ॥ कैलासस्य द्रव्यत्वात् ॥ 43.

धर्मस्येव(l.15) नवः [सर्गो] स्थिति——⏑——⏑— .
सिंहराज[ः सुतस्त?]स्य संहार इव मान्मथः ॥

यो धर्मस्येव(l.16) सर्ग इत्याद्यन्वयो योज्यः . लावण्यातिशयेन राज-राजिकादायि(?)···[सं]हारो[त्रे]त्तणम् ॥(l.17) सिद्धात्मिकोत्प्रेक्षा ॥ स-र्गादयो घञन्ताः तेषां कृदभिहितो भावो द्रव्य············[व्र]व्यवद्भा-(l.18)वेन सिद्धत्वात् ॥ 44.

पुष्करे पुष्कलसुधं प्रासादं सोपि निर्ममे .
श्वेतो गुण इवोपास्ते यो दे(l.19)वं शशिशेखरम् ॥

श्वेतो गुण इव यो हरं सेवते तं प्रासादं सुधासितं स पुष्करे कृतवान् ॥ (l.20) उपमालङ्कारसङ्करोत्प्रेक्षा ॥ श्वेतगुणस्य साधारणत्वेनोपमा भवति संभावनायां तु(l.21)त्प्रेक्षा ॥ 45.

सिंहराजं तमालोक्य सिंहराजमिवापरम् .
धर्मस्य त्रिपदीच्छेदी ननाम(l.22) कलिकुञ्जरः ॥

---

1 Ms. च-ॅ॰.  2 Ms. नत्व॰.  3 Ms. ॰कृषा॰.  4 Ms. नर॰.
5 Ms. ॰रवन.  6 Ms. ॰द.  7 Ms. ॰म.  8 Sic. Read वर.  9 Ms. ॰च्य॰.

अपरं लोकोत्तरं सिंहमिव यं दृष्ट्वा सिंहराजाख्यं धर्मस्य पादत्रयाप-(1.23*)हारी कलिहस्ती नष्टः त्रिपदी गतिविशेषः तच्छेदी च हस्ती सिंहं दृष्ट्वा नश्यति ॥ जात्युत्प्रेक्षा ॥(1 1)सिंहो जातिः ॥ 46.

सूनुर्विग्रहराजोस्य सापराधानपि द्विषः .
दुर्बला इत्यनुध्यायन्नक्षत्रि(1 2)य इवाभवत् ॥

अमी दुर्बला भवन्तीति कृतापराधानपि शत्रूंश्चिन्तयन्नक्षत्रिय इवासीत्(1 3) क्षत्रियकार्यस्य मारणस्याकरणात् ॥ जातिरभावोत्प्रेक्षा ॥ अक्षत्रिय इति जात्यभा(1.4)वः ॥ 47.

अनीलाश्वमिवादित्यं कुर्वद्भिर्हयरेणुभिः .
लेभे खुररजोघोरान्धकार इति(1.5) नाम यः ॥

न नीला अश्वा यस्य तमिवादित्यं कुर्वतीभिर्वाजिधूलिभिर्हेतुभिः खुररजोघो(1.6)रान्धकार इति यो नाम लब्धवान्. अर्थाद्वश्वानां खुररजसा घोरोन्धकारो यस्मादिति विग्रहः ॥(1 7) गुणस्य ॥ गुणस्य नीलत्वस्याभावोत्प्रेक्षणम् ॥ 48.

अतिष्ठन्तमिवात्मानं मत्वा स्वखुरधूलिभिः .(1.8)
वभ्रमुर्वाजिनो यस्य संकटास्वपि वीथिषु ॥

स्वखुररजोभिर्वीथीनामात्मानमवटरूपेणातिष्ठन्तमिव(1 9) मत्वा यदश्वास्संकटमार्गेष्वप्यभ्रमन्. रजसावटानां पिहितत्वात्तेष्वपि वाजिनो वभ्रमुरित्य(1 10)र्थः ॥ क्रियायाः ॥ स्थितिक्रियाया अभावोत्प्रेक्षणम् ॥ 49.

गृह्णद्भिः परया भक्त्या वा(1.11)णलिङ्गपरम्पराः .
अनर्मदेव यत्सैन्यैर्निरमीयत नर्मदा ॥

---

1 Ms. सिंह°. 2 Ms. इव 3 Add अभावोत्प्रेक्षा. (एवमग्रेपि). 4 Ms. °तिष्ठ°.
5 Ms. °त्मानमति°, °वटरूपेण° lc. under l.8 (lc. mark after °न्ते ).

भक्त्यतिशयात्पूजार्थं बाण(1.12)लिङ्गानि गृह्णद्भिर्यत्सैन्यैर्नर्मदा अनर्मदेव निर्मिता . नर्मदायास्तदा बाणलिङ्गाभावात् ॥(1.13) द्रव्य[स्य] ॥ [अनर्मदे]ति द्रव्यस्याभावोत्प्रेक्ष[णम्] ॥ 50.

त्यक्तं तपस्विना [स्वच्छं] यशोंशुक(1.14)मितीव यः .
गुर्जरं मूलराजाख्यं कन्थादुर्गमवीविशत् ॥

तपस्विना वराकेण तपोधने(1.15)न च स्वच्छं यशोंशुकमनेन त्यक्तमितीव मूलराजनामानं गुर्जरं कन्थाख्यं दुर्गं चीरं च(1.16) स प्रावेशयत् . तपस्वी चानुकंप्यार्थे इति कोशः . कन्था च दुर्गं परुषत्वात् ॥ श्लेषोत्थो ॥(1.17) 51.

सूर्यवंशमभूतस्य चन्द्रमण्डलनिर्गता .
तस्य रेवामयी वाहैः कीर्तिर्मलिनिताभवत् ॥(1.18)

सूर्यवंश्यस्य तस्य वाजिभिश्चन्द्रमण्डलान्निर्गता रेवामयी कीर्तिर्मलिनीकृता ॥(1.19) [साप]ह्नवा ॥ रेवामयीति मयटः प्रयोगात् ॥ 52.

व्यधादाशापुरीदेव्या भृगुकच्छे स(1.20-28) धाम तत् .
यत्रैवास्पृष्टसोपानं चन्द्रश्चुम्बति मूर्धनि ॥

आशापुर्याख्याया देव्याः प्रासादमव(1.1)टो(?)करोत् . यत्रैवया स्पृष्टसोपानं चन्द्रश्शिरसि चुम्बति . रेवायाश्चन्द्रप्रभवत्वाच्चन्द्रेण चुम्बनो(1.2)क्तिः ॥ प्रतीयमानोत्प्रेक्षा ॥ अत्र वाक्यार्थप्रतीतिमिमय एव पदार्थसमन्वय-प(1.3)र्यालोचनया चुम्बनस्य तात्विकत्वाभावावगमादर्थस्संभावनात्मक इवार्थ इति प्रतीय(1.4)मानोत्प्रेक्षा ॥ 53.

तस्य दुर्लभराजोभूदनुजो माधवानुगः .
नारीणां सततं येन हृदये(1.5)मदनायितम् ॥

---

1 Ms. °पने च. 2 Ms. °पोत्थे. 3 Ms. चन्द्र°. 4 Ms. has १-२२ on margin.
5 Ms. °रस्ट°. 6 Sic. Is it °नगरकोट्टं? or °देशनृपोत्कटं?

माधवो मन्त्रिविशेषो वसन्तश्च सोनुगो यस्य स दुर्लभराजोस्यानुजोभूत् (1 6) येन नारीणा चेतसि न मदनायित काका मदनायितमेव बभूवेत्यर्थ मदस्य नायित नीय(1 7)मानस्य प्रयोजनम् र्णीवो णिजन्तान्नपुसके भावे क्त नारीणा स्त्रीणा चेतसि मदनायि(1 8)त कामवदाचरितम् कामश्च वसन्तानुगो भवति ॥ 54

चन्द्रोदयन्ति पूर्वाद्रौ मलये चन्दन(1 9)न्ति च ।
मन्दरे क्षीरपूरन्ति तुषारन्ति हिमालये ॥

उपमोपक्रमोत्प्रेक्षाद्वयम् ॥ 55.

यशासि(1 10) शीतलीकर्तुमिच्छयेव दिगङ्गनाः ।
यस्य गोविन्दराजाख्यस्स तस्मादुदपद्यत ॥

हे(1 11)तूत्प्रेक्षा ॥ इच्छयेवेति हेतु ॥ यस्य यशासि कर्तृणि पूर्वशैलादिषु चन्द्रोदयादिवदाचरन्ति. अत्र(1 12) हेतूत्प्रेक्षा दिगङ्गनाश्शीतलीकर्तुमिच्छयेव ॥ उपमोपक्रमोत्प्रेक्षा सर्वप्रातिपदिके(1 13)भ्य क्विबित्येक इत्युपमानात्क्विब्विधान मात्प्रतीतिपर्यवसाने तूपमानस्य प्र(1 14)कृते सभवौचित्यात्सभावनोत्थाने उत्प्रेक्षा ॥ स गोविन्दराजाख्यस्तस्माज्जात ॥ 56

यस्य(1 15) वैरिघरट्टात्व गमितस्य कवीश्वरैः ।
वीर्यशाल्यनुसृत्यर्थमिवाभ्राम्यद्यशो जगत् ॥

कवीन्द्रै (1 16) शत्रुषु घरट्टात्वेन वर्ण्यमानस्य यस्य यशो जगदभ्राम्यदत्र फलमुत्प्रेक्ष्यते वीर्येण शालन्ते(1 17) ये ते वीर्यशालिनो वीर्ययुक्तास्शालयश्च तेषामनुसरणार्थम् ॥ फलोत्प्रेक्षा ॥ अनु(1 18)सरणं फलम् ॥ 57

1 Ms शि Dhātupātha Bhu ādi 926 2 Pānini 3 3 114 3 i e 54 and 55 Comm. of 55 with 56 4 Ms "कलु" 5 Ms "पच" 6 cf Mahābhāshya on Pānini 3 1 11 Kāshika quotes it as a Vārtika 7 Thus Comm Ms reads "शान्त"

तस्माद्वाक्पतिराजेन सम्भूतमवनीभुजा.
कलिः कृतीकृतो येन भू[मिश्च त्रिदि](1.19)वीकृता ॥

वाक्पतिराजाख्येन राज्ञा तस्मात्सम्भूतम्. भावे क्तः. येन कलिः कृतयुगी[कृतः पाद](1.20*)चतुष्टयेन कलावपि धर्मसेवनात्. अतो भूमिश्च स्वर्गस्सम्पादितः॥ अतिशयोक्तिः॥क(1.1)लिकृतयोर्भेदेप्यभेदोपनिबन्धनात्॥ एवं भूमित्रिदिवयोर्ज्ञेयम् ॥ 58.

अम्बाप्रसादमा(1.2)घाटपतिं यस्सेनयान्वितम्.
व्यसृजद्यशसः पश्चात्पार्श्वे दक्षिणदिक्पतेः ॥

आघाट(1.3)स्य हाश्रौनामनगरस्य पति स्वामिनमम्बाप्रसादनामानं ससैन्यं यमस्य समीपं यश(1.4)सः पश्चादनयत्. पूर्वमम्बाप्रसादो दक्षिणाशापतिनिकटं प्रापितः पश्चात्तं यशः(1.5) इति[1] कार्यकारणयोः पौर्वापर्यरूपकालविध्वंसरूपः कालव्यत्यासः ॥(1.6) 59.

भिन्नमम्बाप्रसादस्य येन च्छुरिकया मुखम्.
प्रतापजीविकासृग्भिस्सममेव व्यमु(1.7)च्यत ॥

येन कर्तृभूतेन च्छुरिकया करणभूतया भिन्नमम्बाप्रसादस्य मुखं कर्मभूतं(1.8) प्रतापेन जीवितेनासृजा च समकालं परित्यक्तम् ॥ अत्र कार्यकारणयोर्भिन्नकालयोस्स(1.9)मकालत्वम् ॥ 60.

गोत्रभिद्वैरिभिर्वैरिस्त्रीभिर्दहन इत्यपि..
मृत्युर्वैरिभटैर्वैरिपत्नैः कर्बुरे(1.10)श्वरः ॥ 61.

प्रचेता इति नीविस्रैस्त्राणकामैस्सदागतिः.
धनदोर्थिभिरीशश्च भुवा यः प्रत्यपद्य(1.11)त ॥

---

1 Ms. [illegible] crossed after °ति.

वैरिभिर्यो गोत्रभित्कुलहन्ता वज्री चावसित वैरिस्त्रीभिर्दहनो दहतीति दहन (। 12) तासा हतान्भर्तृननुसरन्तीना दाहहेतुत्वात् दहनोभिश्च . मृत्युर्यम कर्बुरेश्वरो नैऋत शू(। 13)न्यीकरणात् प्रचेता प्रकृष्टचेता वरुणश्च . सती आगतिर्यस्य पवनश्च धनं ददाति वैश्रवण(। 14)श्च [1]ई[श ईश्वर] पूर्वोत्तरदिक्पतिश्च ॥ भेदस्योद्भेदरूपातिशयोक्ति ॥ 62

इन्द्रनीलश(। 15)लाकाया धत्ते स्फटिकपीठताम् .
या मूर्त्तिरशाम्भवी [पूर्णो] नाजैपीत्सापि तद्यशः ॥

इन्द्रनीलश(। 16)लाकेवेन्द्रनीलशलाकेत्युपचारात्कलङ्क तस्या स्फटिकपीठता या शाम्भवी मूर्त्ति (। 17) धत्ते सापि मूर्त्ति पूर्णचन्द्रो यद्यशो नाजैपीदतुलयदित्यर्थ ॥ सम्बन्धे [असम्बन्ध]रूपातिश(। 18)योक्ति ॥ 63.

अद्यापि यो न गतवान्परलोकं यतो भुवा .
विस्मृतान्यमहीपालमालया हृदि(। 19) धार्यते ॥

योद्यापि परलोक न गत यतोन्याञ्चाज्ञो विस्मरन्त्या भुवा लोकेन स्मर्यते तेभ्योस्याधि(। 20)कगुणत्वादिति भाव ॥ सम्बन्धे असम्बन्ध ॥ परलोकगमनसम्बन्धेप्यसम्बन्ध ॥ 64.

वीर्य(। 21)रामस्सुतस्तस्य वीर्येण स्यात्स्मरोपमः .
यदि प्रसन्नया दृष्ट्या न दृश्येत पिनाकिना ॥

तस्य सु(। 22**23)त तस्य पुत्रो वीर्यरामनामा राजा वीर्येण शक्त्या स्मरोपमस्स्याद्यदीश्वरेण प्रसन्नया दृष्ट्या न वीक्ष्येत ॥ अत्र(। 1) स्मरसादृश्यसम्बन्धेपि पिनाकिप्रसन्नदृष्टिविषयत्वादसम्बन्ध ॥ अतिशयोक्तय ॥ 65.

अद्रि(। 2)तीयो रणाल्लब्धशुद्धिमात्रक्षणोचितः .
परित्यक्तो महायोधैस्सहायत्वे स्थितैरपि ॥ 66.

---

1 Ms इ॰ 2 Ms इ॰॰ 3 Ms न्वध 4 Ms मद्य॰ 5 Ms has ए 34 on margin 6 Ms सुतस्य 7 Ms प्रमत्त le under 1 1

अगम्यो यो नरे(1.3)न्द्राणां सुधादीधितिसुन्दरः .
जघ्ने यशश्चयो यश्च भोजेनावन्तिभूभुजा ॥                    67.

तस्य चामुण्डराजेन क(1.4)निष्ठेन विनिर्ममे ·
विष्णोर्नरपुरे धाम विष्णुलोके तथात्मनः ॥

अद्वितीयोप्रतिमल्ल एकाकी(1.5) च सङ्ग्रामात्प्राप्तशुद्धो रुदयस्सहायैरपि योधैस्त्यक्तः राज्ञामगम्यश्चन्द्रमनोहरो यशश्चयो यश्चोज्ज(1.6)यिनीराजेन हतस्तस्य कनिष्ठेन भ्रात्रा चामुण्डराजेन नरपुरे विष्णोः प्रासादो निर्मितः आत्मनः(1.7) च धाम स्थानं विष्णुलोके निर्मितम् ॥ अत्र प्रस्तुतयोर्यस्य यशसश्चाद्वितीयादिभिर्गुणैरभि(1.8)संबन्धः स च केवलेन भवतीति हननक्रियया सह निर्दिष्टः इति गुणरूपधर्माभिसंबन्धे तु(1.9)ल्ययोगिता . तस्येत्यत्र निर्माणक्रिययाभिसंबन्धः ॥                    68.

अभूदुर्लभराजोस्माद्यदीयैः प्रतियो(1.10)गिभिः .
चराचराणां लुठितं पादान्ते भूभृतां भयात् ॥

यस्य शत्रुभिश्चराचराणां भूभृतां राज्ञां(1.11) शैलानां च पादान्ते चरणान्ते प्रत्यन्तपर्वतान्ते च भयाल्लुठितं . भावे क्तः ॥ अत्र चराचरभू(1.12)भृतोप्रस्तुताः तेषां लुठनक्रिययाभिसंबन्धः ॥                    69.

मातङ्गसङ्गरे यस्मिन्वीरसिंहेस्त(1.13)मागते .
अपरागोनुतापश्च विधिना प्रापि कर्कशः ॥

म्लेच्छसंग्रामे यस्मिन्वीरसिंहे हते(1.14) विधिना निन्दा पश्चात्तापश्च प्राप्तो दुस्सहः . मातङ्गा हस्तिनश्च ॥ अपरागानुतापयोरप्रस्तु(1.15)तयोः कार्कश्यगुणाभिसंबन्धः ॥                    70.

एवं प्रस्तुताप्रस्तुतयोर्गुणक्रियाभिसंबन्धात्तुल्ययोगिता च(1.16)तुर्विधा ॥

---

1. Ms. 'कर्कशी'.        2 Ms. 'ल' i.. under l. 6.

एको दशग्रीव इवाच(l.13)कांच  
पितुर्विरुद्धं व्यवहृत्य नाभंम् (?) .  
अन्येन वान्येपि न कुम्भकर्ण-  
न्यायेन नामाप्यत(l.14)—⏑—— ॥ 32.

——⏑———⏑पद्युद्विपोंश-  
स्सत्योवतो विग्रहराजनामा .  
महायता(l.15)- 33.

*[Lines 16 to end of page missing](*)*

गूर्जरेन्द्रो जयसिंहस्तस्मै यां दत्तवान्सा काञ्चनदेवी रात्रौ च दिने च सौमं सोमेश्वरसंज्ञम(l.1)जनयत् ॥ 34.

उत्पत्स्यते कंचन कार्यशेषं  
निर्मातुकामस्तनयोस्य रामः .  
सांवत्सरैरित्युदि(l.2)तानुभावं  
मातामहस्तं स्वपुरं निनाय ॥

कंचित्कार्यशेषं संपादयितुमस्य राम उत्पत्स्यते इ(l.3)ति ज्योतिर्विद्भिः कथितमाहात्म्यं तं सोमेश्वरं मातामहो निजनगरमनयत् ॥ 35.

सर्व(l.4)प्रकारं खलु संमुखोपि  
तस्यानुरूपं तनयं विधाता .  
विधातुमन्यप्रतिभो यदासी-  
च(l.5)तो न तं सान्वयतां निनाय ॥

सर्वथानुकूलोपि विधिस्तस्य सदृशं पुत्रं कर्तुमनभिज्ञो(l.6) ध्रुवं यदासीत्ततो राजानं सपुत्रतां नानयत् ॥ 36.

---

1 Is it न्यस्ते? 2 Ms. स्पर्द्धे. 3 Ms. ग्रेस le. on top margin.

चतुर्मुखत्वे सदृशे विरिञ्चा-
द्विष्णोर(l 7)लूनाननताविशेषः .
देवस्तु पञ्चाननताविशिष्ट-
ष्षडाननत्वं गुहमानिनाय ॥ 37.

प्र(l 8)कृष्टतामभ्यधिकामतोपि
स्रष्टुं पटुर्न ध्रुवमीश्वरोपि .
अतः कुमारं विदधे कुमार(l 9)-
मैच्छन्न तन्न्यूनसमान्ववायम् ॥

विरिञ्चाद्ब्रह्मणस्सकाशाद्विष्णोस्सकाशात्पंचा(l 10)ननत्वेन महेश्वरोधिकः स च स्वपुत्रं कुमारं षण्मुखत्वमनयत् अतोपि कुमारादपि प्र-(l.11)कर्षं कर्तुमीश्वरोपि ध्रुवमसमर्थः अतः कुमारं कुमारमेव कृतवान् कुमारादपि कु(l 12)मारपुत्रस्य विशेषकरणसामर्थ्याभावादीश्वरः कुमारं ब्रह्मचारिणं कृतवानित्यर्थः(l 13) महेश्वरः कुमारं न्यूनोथवा समोन्ववायः पुत्रो यस्य नैच्छत् ॥ 38.

इत्थं विविञ्चन्नृपतिस्सम(l 14)- 39.

[Lines 15 to end of page missing](**44)

कर्मसु धूर्जटिमीश्वरम् ॥ 40.

भविष्यतानेन विमानदातु-
र्हातुं धनेशाद्वरयानलज्जाम्(l 1) .
रामस्य पित्रा दुहितुस्सुतेन
सुतेजसा नन्दतु चक्रवर्ती ॥

धनेशाद्वैश्रवणान्नरयाने(l 2)न नरस्कंधाधिरोहणेन लज्जां हातुं त्याजयितुमिव विमानदातुः पुष्पकाख्यविमान(l 3)प्रतिदायिनो रामस्य पित्रा

1 Ms. 'रकु' 2 Add वाहन.

भवित्री भविष्यतानेन दौहित्रेण चक्रवर्ती तुष्यतु . जह्नाविरन्वभोवि(l.4)-त्यर्थः ॥ 41.

श्रुत्वेति दौहित्रमुखारविन्द-
लावण्यलक्ष्मीसहवासमक्ताम्.
विधाय(l.5) दृष्टिभ्रमरीं कथञ्चि-
त्तत्संमुखीं भूपतिराबभाषे ॥

दौहित्रमुखपद्मलाव(l.6)ण्यसमृद्धिसहवासेन मत्तां दृष्टिभ्रमरीं तस्य दैवज्ञस्य संमुखीं कृत्वा राजावदत् ॥(l.7) 42.

अथौपमेवं बहुधा बहुभ्य-
स्संदेहगेहं च मनो ममाभूत्.
तदस्ति किञ्चिन्नहि जी(l.8)वलोके
प्रियंवदानां न यदीरणीयम् ॥

बहुभ्यः सकाशाद्बहुधा चाहमेवं श्रु(l.9)तवान् मम मनस्तु सन्देह-स्थानमेवाभूत् चाटुकाराणां न किञ्चिदवाच्यं यतः ॥(l.10) 43.

षाड्गुण्यमन्त्री परमार्थतस्तु
प्रजापतेस्त्वं प्रतिभाससे मे.
ललाटपट्टेषु कृतो नृ(l.11)णां वा
त्वं तेन लिप्यक्षरसूत्रधारः ॥

*विधातुष्षाड्गुण्ये सृष्टिविषये व्यवहारे मन्त्री(l.12) उपदेष्टा त्वं भवसि.* त्वमेव प्रजापतेस्सुखदुःखलेखनोपदेशं करोषीत्यर्थः य(l.13)द्वा प्रजापतिना त्वं लिपिलेखकरः कृतः. त्वमेव लिखसीत्यर्थः ॥ 44.

आज्ञां त्वदी(l.14)[यामनुवर्त्तमानः]
शरीरभाजां प्रसवप्रसङ्गे.

---

1 Ms. भत्रा. 2 Ms. °यन्वि°. 3 Ms. °केल°.

ज्योतींपि तीक्ष्णांशुमुखान्यमूनि(l.15)
⏑—⏑—⏑—⏑⏑—⏑—॥

[प्रा]णिनां जन्मकाले त्वदाज्ञानुसारं सूर्यादिग्र(l.16)············
···णवन्मुमोच(l.17) 45.

[Lines 18 to end of page missing](*)

भेरणान्तराणि ॥

संशय एव वंशस्तच्छेदं कृत्वा मुक्तारत्नसममुक्तं वचनं सूच्यता(l.1)मुच्यतामत: यथा सन्देहो न भवति तथा कथयेत्यर्थ: . यद्वा व्यादाय , स्वपित्यादिष्वि(l.2)दं द्रष्टव्यम् . मम हृदये स्थितेन येन भूषणान्तराणि त्याज्यत्वं प्रापुः . त्वद्वचनमेव(l.3) भूषणभूतं हृदि धारयामीत्यर्थ: ॥ 46.

सन्देहबीजमाह ॥

इदं हि तद्व्योमनि चित्रकर्म(l.4)
मरुस्थले श्रीसहजस्तरुर्वा .
सूर्योदयो वा भुजगेन्द्रलोके
कलौ युगे यद्भुवि कै(l.5)टभारि: ॥

हरिर्यस्मादर्थे . कलिकालेपि विष्णुर्भूमौ यदवतरति तदिदमाकाशे चि-(l.6)त्रं भवति मरौ पारिजातो भवति सूर्योदयो वा पाताले भवति . अतो मम सन्देह इत्यर्थ: ॥(l.7) 47.

कस्यार्थं पुण्यानि तथाविधानि
प्रादुर्भवेयुश्चरमे युगेस्मिन् .
यस्याः करिष्यत्युदरं प(l.8)वित्रं
गङ्गाभुजङ्गादपि शार्ङ्गपाणि: ॥

---

1 Restore क्विाय मे सपथनयभेदं कत्सूत्वा मुक्तारत्नमुक्तम्, भवन्ति मे येन हृदिस्थितेन त्याज्यानि सर्वाभ° ? 2 Ms. °त्थ°. 3 Ms. °ष्णुभू°. 4 Ms. °स्माच. 5 Ms. °न्दुर°.

इदमपि संशयवीज हरिर्यस्या उ(। 9)द्दरं समुद्रादपि पवित्र करिष्यति तस्या. कस्या कलावपि पुण्यानि तथाविधानि (। 10) भवन्ति . यैस्सत्करिप्यत्युदरमित्यापे. पाठ ॥ 48.

आरुह्य संकल्पविकल्पतल्पं
ज(। 11)ल्पन्तमित्थं जयदेवासिद्दम् .
स्मित्वा विधातेव स मन्युमूर्ति-
र्मौहूर्तिकः स्फूर्तिम(। 12)दित्युवाच ॥

संकल्पाश्च विकल्पाश्च तदेव तल्पमाश्रित्य प्रच्छन्तं जयसि(। 13)हदेवं मौहूर्त्तिको ज्योतिर्विन्मन्युमूर्त्तिः. प्रजापतिरिव किञ्चिद्विहस्योर्जितमेवमवो-(। 14)चत् ॥ 49.

दशावतारानुकृतिप्रगल्भैः
पुरा मुरारेर्दशभिश्शिरोभिः .
दिङ्मात्र(। 15)- 50.

[Lines 16 to end of page missing](**15)

⏑—⏑—⏑—⏑तस्थं .
तामुज्जहार त्वरितं स दृष्टि
सर्वसहां कोसलराजपुत्र्याः ॥

शोकाग्निना पीतेपि वृ(। 1)द्धि गच्छति वाष्पसमुद्रे ब्रुडितां यासीत्तां कौसल्याया दृष्टि सर्वसहा शोकसहा स उद्धृ(। 2)तवान् सर्वसहा भूमि च हरिरुद्धृतवान् ॥ 51.

जीमूतकेशत्वटशोपपन्न-
सौदामिनी(। 3)सोदरपिङ्गलिम्ना .
ममार्ज वाष्पाम्बुनिपातपाण्डू
पादौ जटाना पटलेन चास्याः ॥(। 4)

---

1 Comm [illegible] 2 Ms [illegible] 3 Ms [illegible] le under l 13
4 Ms. [illegible] 5 Ms [illegible] 6 Ms [illegible] 7 Restore [illegible] 8 Ms [illegible] See pp 13 and 12, note 2. 9 Ms. [illegible].

जीमूतकेशत्वदृशयोपपन्नस्सौदामिनीसोदरः पिङ्गलिमा यस्य तेन विद्युत्कपिशे(l 5)नेत्यर्थः. बाष्पजलपाण्डू मातुः पादौ रामो जटापटलेन शोधितवान् प्रणामं कृ(l.6)तवानित्यर्थः ॥ 52.

रामप्रणामानुपदं विमुक्तं
प्रणम्य सुग्रीवविभीषणाभ्याम्.
त(l.7)त्पादमेकं पवमानसूनु-
रन्यं सुमित्रातनयो ववन्दे ॥

रामस्य प्रणामानन्तरं सुग्री(l 8)वविभीषणाभ्यां प्रणम्य मुक्तमेकं कौसल्यायाः पादं हनुमानन्यं लक्ष्मणो वन्दि(l.9)तवान् ॥ 53.

त्वं मे महर्षे बहुमानभूमि-
रलं प्रणम्येति ससंभ्रमायाम्.
पादौ ज(l.10)नन्यामपसारयन्त्यां
जटाधरो लक्ष्मण इत्युवाच ॥

तपोधन मम त्वं बहुमानपात्रं भ(l.11)वस्यतः प्रणम्यालं मा प्रणामं कृथा इति संभ्रमसहितायां मातरि पादौ संवृ(l.12)ण्वत्यां सत्यां लक्ष्मण एवमवोचत् ॥ 54.

आर्यस्य कान्तारविहारकेला-
वहं सदानु(l 13)⏑⏑—⏑——.
समन्वयातः क्षणमेव दृष्ट्या
विधीयतां मातरनुग्रहो मे ॥

आर्य(l.14)··············मनया दृष्ट्या हे मातः(l.15) 55.

[Lines 16 to end of page missing] (*)

---

1 Ms. 'सुप'. 2 Ms. 'षा', 'दा' on margin. 3 Ms. 'ष्ट्वा.

ज्येष्ठानुरागाख्यनिधानकोशे
मुद्रानिवेशो निहितो हृदीव ॥

ततः कौसल्यया हृदि सू(1.1)क्ष्मं मेघनादपातितशक्तिव्रणचिह्नं[1] लक्षितम्. अतस्संभाव्यते श्रीरामविष(1.2)ये स्नेहनामनिधिकोशे न्यस्तो मुद्रानिवेश इव ॥ 56.

किमेतदित्याकुलया स्पृशन्त्या
पृष्टो(1.3)पि मात्रा न स किंचिदूचे.
द्रोणाचलेन्द्रोद्धरणोद्धुरोपि
नेमे च लज्जातिभरात्कपीन्द्रः ॥(1.4)

व्रणं स्पृशन्त्या व्याकुलया मात्रा किमेतदिति पृष्टोपि लक्ष्मणो न किंचिदुक्तवान् व्रण(1.5)रोपणौषध्यानयनार्थं द्रोणाख्यपर्वतोद्धरणेनोद्धुरोपि हनुमांल्लज्जाभरादनमत्(1.6) मयि सत्यनेनायोधीति लज्जाभरः ॥ 57.

यथाभवत्तस्य च शक्तिपातो
धन्वन्तरिर्वायुसु(1.7)तो यथा च.
वितत्य रामेण तथा समस्तं
मातुः पुरस्तात्प्रतिपाद्यते स्म ॥

लक्ष्मणस्य श(1.8)क्तिपातो यथाभूद्यथा च हनुमान्विशल्यीकरणे धन्वन्तरिरासीत्तथा स प्रकारस्स(1.9)मस्तं विस्तरेण मातुरग्रे रामेण प्रतिपादितः ॥ 58.

स्तुतिर्जगत्प्राणसुतस्य के(1.10)यं
जागर्ति यत्प्राणयितुं जगन्ति.
हरिस्तथा भाति न कौस्तुभेन
यथामुना लक्ष्मण(1.11) लक्ष्मणा त्वम् ॥

---

1 Ms. सूक्ष्मं लक्ष्मस्य crossed after °क्ष्मं. 2 Ms. °षो°. 3 Ms. °रपृष्टो°.
4 Ms. °मात्र° 5 Ms. धान्य°. 6 Ms. °न्वरि°. 7 Ms. °तन्. 8 Ms. °गन्ति व°.

जगन्ति प्राणयतीति जगत्प्राणो वायुस्तस्य सुतो हनुमांस्तस्ये(1.12)यं का स्तुतिः यज्जगज्जीवयितुं हनुमाञ्जगर्ति . एतेन न केवलं हनुमता ल(1.13)क्ष्मणः प्राणितो यावज्जगन्त्यपि लक्ष्मणवत्प्राणयतीति प्रतिपादितम् लक्ष्मणे प्राणिते रामस्य······कार्याणा(1.14)·············जीवनार्थं य-·············(1.15) 59.

[Lines 16 to end of page missing](**46)

मनुजस्य सेवा-
मनुस्मरन्वाक्यमिदं बभाषे ॥

लीलयात्तो मनुष्यभावो येन स देवो रामः(1 1) कौसल्योक्तमेव श्रुत्वान्येन कर्तुमशक्यां लक्ष्मणस्य सेवां स्मरन्निदमवोचत् ॥ 60.

तिलकम् ॥(1 2)

मातर्मृषा प्रार्थयसे त्वमेवं
भवादृशीनां नहि तत्वमेतत् .
देवी भवानी किमु कार्त्ति(1 3)केय-
गाङ्गेययोः किञ्चिदवैति भेदम् ॥

हे मातस्त्वमेवं मृषा याचसे त्वादृशीना(1 4)मेतन्न युक्तं रामो मदीयो लक्ष्मणोऽन्यदीय इति यतो गौरी कुमारहेरम्बयोर्भेदं न जा(1 5)नाति ॥ 61.

आशंसनीयं तु ममेदमस्ति
यथाग्रजं मामनुजस्सिषेवे .
तथाहमस्या(1.6)नुजतामुपेत्य
सेवाविधानात्कृतनिष्क्रयः स्याम् ॥

1 Ms °ञ्जगन्ति. 2 Ms. lc on margin 3 Restore देव॰ ए लीलात्तमनुष्यभावो मात्रेति वाक्यमिदं निशम्य । अनन्यकार्यमनु° (?) 4 Comm. युक्तं.

मम त्वेतदाकाङ्क्षणीयं यथा माम(17)भजं लक्ष्मणोनुजस्सेवितवानेवं लक्ष्मणस्यानुजो भूत्वा सेवनात्कृतार्थमुक्तिस्स्याम्. आ(18)शंसनीयमिति पाठो नार्षः ॥ 62.

एतस्य सेवां च चिरस्य कृत्वा
भावान्विदित्वा क्षणभङ्गिनोमून्.(19)
अनेन जूटस्य भरेण खिन्नः
काषायधारी भवितास्मि मुण्डः ॥

लक्ष्मणस्य सेवां चिरं कृ(1.10)त्वा तथामून्पदार्थान्क्षणनश्वरान्निश्चित्य जूटभरेण खिन्न इवाहं काषायधारी मुण्डः भविता मुण्डत्व(111)भंवनाह्·· मं(?)स्याम्. बुद्धदर्शने काषायं वसनं मुण्डत्वं च धर्मः ॥ 63.

श्रोत्रप्रविष्टादिति भूतधात्री-
जा(112)मातृवाक्याद्विनयावनम्रः.
उन्निद्रकीर्तिस्तवकैकचैत्र-
स्सौमित्रिरित्थं कथयांचका(113)र ॥

उन्निद्राणां कीर्तिस्तवकानामेकश्चैत्रः कीर्तिं विकासयितेत्यर्थः श्रुताद्धरणीजा(114)[मातृ रामस्य] वाक्याद्धेतोर्विनयावनम्रो लक्ष्मण एवमवोचत् ॥ 64.

पाथःकणाः पक्ष्मचि(115)-⏑——
—⏑—⏑⏑—⏑—.
—⏑—⏑⏑—⏑—
[भू]याद्दयं मे सफ(116)[ल:]⏑——. 65.

[Lines 17 to end of page missing] (*)

भविष्यामि सहस्रमूर्धा ॥

---

1 Ms 'दित्वा'. 2 Ms भवनाह on margin 3 Ms written above 'स्या'. 4 Ms. 'स्तव'.

अनेन भोगेन मम शोभा नास्ति अतोहमीदृशं भोगित्वं सर्पत्वं(1.1) भोगभाक्त्वं च प्राप्नुयाम् येन त्वत्पादपवित्रां भूमि स्प्रष्टुं सहस्रं मूर्ध्नां शिरसां फणानां(1 2) च यस्य स स्यामित्यादरद्योतनम्. शेषो भवेयमित्यर्थः ॥ 66.

इत्थं महीनाथ कथानवद्या
पु(1.3)राभवद्या पुरतो जनन्याः .
स्नेहानुबन्धादपि दाशरथ्योः
पफाल तस्यां प्रथमस्य वाक्यम् ॥(1.4)

हे राजन्मातुरग्रे या कथा पूर्वमभूत्तस्यां कथायां प्रथमस्य रामस्य वाक्यं फलितम् ॥(1 5) 67.

तथा हि रामत्वमुपेयुषः प्रा-
ग्ज्येष्ठस्य निर्वाहितसाहचर्यः .
कृष्णः कनिष्ठस्स विवेक(1 6)निष्ठ-
स्तथागतत्वं प्रतिपन्न एव ॥

तथा हीत्यादि प्रथमवागुत्पत्तिपरम् हलधरभावं प्राप्त(1.7)स्य ज्येष्ठस्य भ्रातुर्लक्ष्मणावतारस्य संपादितसाहायकः कनिष्ठः कृष्णो बुद्धत्वं प्राप्तः ॥(1.8) 68.

अपत्यरत्नद्वयसंनिधान-
निधानभूः कोसलराजपुत्री .
यथा भवित्री विदितं तथा(1 9) मे
वद्धावधानः क्षणमस्तु देवः ॥

कौसल्या द्वौ पुत्रौ यथा सूते तथा मम विदितमतो (1.10)राजा क्षणं सावधानो भवतु ॥ 69.

चक्षुस्त्रयाणां जगतामवामं
वामं तयाणामपि का(1.11)रणानाम् .

1 Ms. °न्या. 2 Ms. °पवी (?) 3 Ms. पत्रौ.

योयं जयत्यत्रिमुनेरिवाब्धे-
रयोनिजं पुण्यमपत्यमिन्दुः ॥

यस्त्रयाणां(l. 12) जगतामवामंमनुकूलं चक्षुस्तथा ब्रह्मादीनां कारणानां वामं चक्षुः तथात्रिमु(l.13)नेस्समुद्रस्य चायोनिजातमपत्यं चन्द्रोयं जयति ॥ 70.

मयाष्टधा लोकहिताय चक्रे(l.14)
कृता तनुष्षोडशधा त्वयैव .
इतीव यो मूर्धनि धारणीयः
परिश्रमज्ञेन महेश्वरेण ॥(l 15)

मया लोकानां हितार्थं प्रकृतिरष्टधा कृता अनेन चन्द्रेण पुनरेका····
·········(l.16) 71.

[Lines 17 to end of page missing] (**47)

पाणौ बिभर्त्ति हृदयेमृतकलशान्तर्विभर्त्ति दृग्गोचरे वामनेत्रे बिभर्त्ति चन्द्रं कर्पूरमिव(l.1) . मृत्युञ्जयस्य कर्पूरोत्कूलितस्यागमेष्वभिधानात् . अन्या लोकोत्तरा प्रादेशिकी न प्रदेशे ए(l 2)कदेशे भवा भूषास्य चन्द्रस्य[4] भूषणत्वं भवति किंवद्रत्नवत् शोभामात्रं समानो धर्मः(l 3)चन्द्रमिवेति वान्वयः ॥ 72.

लोकार्थमष्टावपि मूर्त्तयोमू-
रतिप्रकृष्टा तु य एष मूर्त्तिः .(l.4)
कामं च कालं च हि सर्वकालं
यतोनुगृह्णात्यविरोधमीशः ॥

हरस्याष्टौ मूर्तयो भूम्या(l.5)द्यो लोकहितार्था भवन्ति एष यश्चन्द्रा मूर्त्तिर्भवति सा लोकहितार्थमतिप्रकृष्टा भव(l.6)ति अतो हेतोरीशः कामं

1 Ms. °वाप°. 2 Ms. °न्तवि°. 3 Ms. °व°. 4 Ms. भूषा crossed after °स्य. 5 Ms. °र्द°. 6 Ms. °श. 7 Ms. सन्तेत्र°.

कालं च विरोधत्यागेनानुगृह्णाति . चन्द्रस्य कामोद्दीपकत्वात् काल(l 7)स्य तिथिमुखेन व्यवस्थितस्य चन्द्रेणैव संपादितत्वात् ॥ 73.

अखण्डितेच्छैरपि राजदारैः
मि(l 8)यान्तराश्लेषसुखं न लभ्यम् .
इतीव धन्याः प्रति दक्षकन्याः
प्राप्नोति नित्यं नवरूपतां यः ॥(l 9)

राजानो नृपा राजा चन्द्रश्च तत्प्रियाभिरैश्वर्येणाखण्डितेच्छाभिरपि नवनवदयितालि(l 10)ङ्गनसुखं न लभ्यते इत्यत इव भाग्यवतीस्तारा: प्रति यो नित्यं नवत्वं गृह्णाति कलानां च(l.11)यादपचयाचेति भाव: ॥ 74.

पक्षस्थिते दैत्यगुरौ विवादं
कृत्वा समं वाक्पतिनान्वयार्थे .(l 12)
य एव लेभे विजयप्रशस्तिं
श्रेयान्हि राज्ञः कविपक्षपातः ॥

चन्द्रस्य पक्षे स्थिते शुक्रे(l 13) सति बृहस्पतिना साकं पुत्रार्थे[1] विवादं कृत्वा य एव चन्द्रो विजयकीर्त्तिं लब्धवान् जी(l 14)·········त: बृहस्पति-चन्द्रयोर्विवादो जात: क्षेत्रिणो ममायं बुध: पुत्र इ(l 15)- 75.

[Lines 16 to end of page missing] (*)

प्रतिबिम्बिता भूर्यत्तत: कलङ्क: कलङ्क इति प्रवादो जात: . कलङ्क: कलङ्क इति द्विरुक्ति(l.1)र्वीप्साप्रतिपादनार्था ॥ 76.

वत्रे बलादाङ्गिरसाङ्गनापि
यदेनमेपोपि कथङ्कल(l 2)ङ्कः .
विहाय देवीं दमघोपसूनुं
न रुक्मिणी किं विधुमालिलिङ्ग ॥

---

1 Ms. 'र्थे'.

आङ्गिरसो जीवः(1.3) तस्याङ्गना रोहिणी साप्येनं बलाद्यद्वत्रेचकमत सोपि नास्य दोषः शिशुपालं त्य(1.4)क्त्वा रुक्मिणी विधुं विष्णुं किं नालिङ्गत् ॥ 77.

तुषारगौरादपि जातमस्मा-
त्सुंत्रामरामा(1.5)श्रवणोचितेन .
इन्दीवरेणेव सुरस्रवन्ती-
ह्रदान्महानीलरुचा बुधेन ॥

शच्या श्रोतुमु(1.6)चितेन . सुरूपत्वादिति भावः . बुधेन महानीलकान्तिना यतो हिमशुभ्रादपि जातम्(1.7) यथा शचीकर्णपूरत्वोचितेन नीलोत्पलेन गङ्गाप्रवाहात् ॥ 78.

अङ्कस्पृशमित्यादि(1.8) बुधस्तुतिपरमनन्तरकुलकम् ॥

अङ्कस्पृशं यं परभागभङ्गी-
सौभाग्यहेतुं स्मरतेव(1.9) बालम् .
अद्यापि नीलोत्पलचारुनेत्रो
नोत्सृज्यते चन्द्रमसा कुरङ्गः ॥

बुधो नील इत्यतः(1.10) परभागभङ्ग्या सौभाग्यस्य हेतुमङ्कारूढं यं बालं स्मरतेव चन्द्रेण मृगोद्याप्यङ्कान्न(1.11) त्यज्यते नीलोत्पलदृष्टिः ॥ 79.

सितेन्दुमुक्तामणिजीवहीर-
भौमार्करक्तोपलगुम्फि(1.12)तो यः .
आकाशलक्ष्म्या इव कण्ठसूत्रे
सहार्किणा नीलमणित्वमेति ॥

सितेन्दू एव(1.13) मुक्तामणी जीव एव हीरो भौमार्कावेव रक्तोपलौ

---

1 Ms. °क्षी°. 2 Ms. °वशुभ्रा°. 3 Ms. °च्छाच्यो°. 4 Ms. °गी°. 5 Ms. °स्र°. 6 Ms. वे.

पद्मरागौ तेपु गुम्फितो यो बुध (l 14)·· ·········दलदम्याः कण्ठसूत्रे इन्द्रनीलभावमेति ॥ 80.

अल्पो महान्वां महसास्तु(l 15)

[Lines 16 to end of page missing](**48)

—न्निकटे स्थित इत्यर्थः. पुत्रा पितुः पार्श्वे वसन्तीति तात्पर्यम्. अयं बुधश्चन्द्रसकाशाद्व्यवहितो(l 1) यदास्ते तत्तस्मादहं मन्ये इति शेषः. जीवाद् गुरोरुपजीव्यादधीत्यायं बुधो भूमिजे भौमे स्वकु(l 2)लजातराजोद्देशेन बुद्धिं ददाति. शनिः पितुस्सूर्यस्य सकाशाद्व्युत्क्रमेण पार्श्वे वसतीति नी(l 3)त्युल्लङ्घनप्रकाशनम् बुधस्तु चन्द्रारक्रमेणैव तिष्ठति किन्तु भौमेन व्यवहितः तथाविधा(l 4) स्थितिः पुण्यार्थमेवास्य भवति. अयं हि गुरोर्नीतिमधीत्य भौमस्य प्रतिपादयति भौमेन(l 5) पुत्रेण नीतिर्भुवो वर्ण्यते सा च स्वपत्नीनां राज्ञा वर्णयत्यतो बुधस्य पुण्यम् ॥ 81.

रक्षःपराभू(l 6)त्यभयप्रदान-
प्रीतोर्वशीनिष्क्रयढौकितात्मा.
बुधप्रसूतिः पुरुहूतमित्रं
पुरूरवाः पार्थि(l 7)वचक्रवर्ती ॥

रक्षसां पराभूतिस्तयाभयप्रदानं तेन प्रीतयोर्वश्या निष्क्रयेण प्रत्युपकारेण(l 8) ढौकित आत्मा यस्य स पुरूरवा बुधपुत्रो वज्रिसखश्चक्रवर्ती बभूव. राक्षसेभ्यो रक्षितयोर्वश्या(l 9) स्वात्मा यस्य प्रतिपादितस्स पुरूरवा बुधपुत्र इत्यर्थ ॥ 82.

शीतोष्णभावेन मिथो विरुद्धौ(l 10)
यां दीक्षितत्वेपि यदेक्षिपाताम्.
संतप्ततां तद्गुरुणो बभार
मित्रश्च जाड्यं प्रतिपद्यते स्म ॥(l 11)

---

1 Ms 'न्दु' 2 Ms 'न्ता 3 Ms 'ब्याधी' 4 Ms 'तोव'. 5 Ms 'नां.
6 Ms 'नि' crossed after 'व 7 Ms 'प'

वरुणश्शीतो रविरुष्ण इति विरोधिनावपि वरुणार्कौ दीक्षितावपि यांमुर्वशीं यद्द्रष्टु(1 12)वन्तौ तत्तो वरुणस्सन्तापमवहत् मित्रस्सूर्यो जाड्यं जडत्वमवहत् ॥ 83.

> साप्युर्वशी मा(1 13)प्य तमुर्वशीशं
> तथा च नोजन्मवशंवदाभूत् .
> अस्याश्शची पामरकामिनीव
> यथा न सं(1 14)—⏑⏑—⏑—— ॥

पुरूरवसं प्राप्य साप्युर्वशी तथा कामातुराभूद्यथा पामरस्त्रीव(1 15)
················ादित्यर्थे ॥ 84.

> वहुष्वंती.—⏑⏑—⏑——(1.16)   85.

[Lines 17 to end of page missing] (*)

·· ··· · इन्द्रसमं पुत्रमिच्छतस्तस्य यैस्तपोभिर्हेतुभिः कुशिकस्य गाधिनामेन्द्रस्स्वयमेव जातः ॥ 86.

> धर्त्तुं धरित्रीं(1 1) नवमो बभूव
> नगाधिराजस्स न गाधिराजः .
> ऐन्द्रीपु यस्येष्टिपु शश्वदासी-
> देकाश्रयस्त(1 2)र्पकतर्प्यभावः ॥

स गाधिराजो भुवं वोढुं नवमकुलपर्वत आसीत् कोकासीदेवेत्यर्थः यद्वा स गाधिराजो नासीत्किं तर्हि नवमो नगाधिराजः इन्द्रयागेपु यस्य तं(1 3)र्पकतर्प्यत्वं चैकाश्रयमासीत्. स हि शक्रः तर्पकश्च स एव स एवे-न्द्रयागे तर्पणीयः ॥(1 4) 87.

---

1 Ms मानु॰.  2 Restore ॰तेषु  3 Ms यं॰ to ॰भि lc on margin
4 Ms न written below भा॰  5–5 Ms lc on top margin.  6 Ms तत॰

को वेद तद्गाधिभुवस्स तत्वं
दधत्पुरस्तादपि राजतत्वम्.
अपारतो यस्तपसः प्रभावा-
त्सुव(15)र्णतां भावनयोपनीतः ॥

तत्तस्माद्धेतोर्गाधिभुवो विश्वामित्रस्य माहात्म्यं को जानाति यत्पू(16)र्वं राजतत्वं क्षत्रियभावमपि दधत्तपसोपारात्प्रभावाद्धेतोर्भावनया सुवर्णतां शोभन(1.7)वर्णत्वं ब्राह्मणत्वं नीतः. क्षत्रियोपि हि विश्वामित्रस्तपोमाहात्म्याद्ब्राह्मणत्वंसंपन्नः. अथ च(18) यः पदार्थः पारदो न भवति राजतं रूप्यं सुवर्णं करोतीत्यपि विरोधाभासकः ॥ 88.

निन्ये हृ(19)रिश्चन्द्रमधोगतिं य-
दुच्चैः पदं चागमयत्त्रिशङ्कुम्.
कोपप्रसादौ नृपगोचरौ त-
त्यक्त्वा(110)पि यो राज्यमपेक्षते स्म ॥

विश्वामित्रो हरिश्चन्द्रं यदधः कृतवांस्त्रिशङ्कुं च यदुच्चैः पदं(1.11) प्रापयत्तद्राज्यं त्यक्त्वापि कोपप्रसादावेवापेक्षते स्म नृपाणां गोचरौ राज्ञामेव कोप-(112)प्रसादावुपयोगिनौ अयं तु राज्यं त्यक्त्वापि निग्रहानुग्रहोद्यतोभूदित्यर्थः उदारचे(1.13)तसा तेन तयोरेव राज्यफलत्वगणनादिति भावः ॥ 89.

स चक्रवर्ती भरतोपि जज्ञे(114)
—⏑——⏑⏑—न्दुगोत्रे.
राज्याभयं कर्तुमनेकवारं
पुलोमजा यस्य पुरे ययाचे ॥

स हृ(115)- 90.

[Lines 16 to end of page missing](**49)

1 Ms येत°. 2 Ms °परी°. 3 Ms °चप° written above °पुर°.
4 Doublet of पारत, See 17. 5 Ms. °चरो

ख्यानकरं जघान.
इतीव यद्दोर्वनदृप्तदन्ती
रामेण रामो दमयांबभूवे ॥

मम पूर्वपुरु(1.1)षस्सहस्ररश्मिः तस्य मम गणनकरं कार्तवीर्यमयं हतवानित्यस्मादिव कार्तवीर्यभुज(1.2)वनमत्तगजः परशुरामश्रीरामेण दमितः. मत्तश्च हस्ती दम्यते ॥ 91.

द्वाभ्यां शताभ्यां स क(1.3)रैररौत्सी-
त्पंचाशता च ध्रुवमेकमेकम्.
नैकोपि पादश्चलति स्म येन
धर्मस्य तस्मिन्परिरक्ष(1.4)ति क्ष्माम् ॥

पञ्चाशदधिकशतद्वयसंख्यैः करैस्सहस्रबाहुः कार्त्तवीर्यो धर्मस्यैकमेकं पादं त(1.5)द्ध्रुवं रुद्धवान् यतस्तस्मिन्भुवं पालयति धर्मस्यैकोपि पादो नाचलत् ॥ 92.

कलिर्जजागा(1.6)र चुरिक्रियायां
कृतस्य दत्ताभय एष राजा.
तेनास्य पृथ्वीवलयप्रसिद्धिं
प्राचुर्यमूहे(1.7) कलिचुर्युपाख्या ॥

कार्त्तवीर्यस्य कलिचुरिरिति नाम प्रसिद्धं तत्र कविरन्वर्थतामूहते(1.8) चुर स्तेये इत्यस्य धातोः क्रिया चुरिक्रिया तस्यां हरणेर्थात्कृतयुगस्य कलिरुधतः. कार्त(1.9)वीर्यः कृतस्य दत्तोभयः तेन ध्रुवं कलिचुरिसंज्ञा राज्ञो भूमण्डले प्रसिद्धिमवहत् ॥(1.10) 93.

तदीयमेवाभरणायमानं
क्रमागतं नाम समुद्वहन्तः.

---

1 Read सप्ता°. 2 Ms. °रो°. 3 Ms पाद lc on margin 4 Ms. प्रपुर्व°.
5 Ms. तरा° written under दत्ता° Is it नत्र दत्ताभय ?

आसन्प्रवृत्ते कलिघर्मका(l.11)ले
कालीवने केचन भूमिपालाः ॥

क्रमागतं भूपगणसमं तन्नाम धारयन्तः केचिद्राजा(l.12)नः कलिग्रीष्मे प्रवृत्ते सति कालीवनमाश्रुएवन्. ग्रीष्मे च वननिवासौचित्यम् ॥ 94.

तेषा(l.13)मगात्साहसिकाभिधानः
प्रधानभावं प्रधनाध्वगानाम्.
यस्य प्रसन्ना दृढशेसिलेखा
का(l.14)[लीव देवी रिपु]पार्थिवस्य ॥

प्रधने युद्धे पान्थानां तेषां मुख्यत्वं साहसिकनामा राजा(l.15)··· ·········काली देवीव दृष्टा ॥ 95.

सत्त्वं विना साह(l.16)⏑—⏑——
——⏑——⏑⏑——⏑——.
——⏑——⏑⏑—⏑——
मनन्यगामिन्य(l.17)⏑——⏑—— 96.

[Lines 18 to end of page missing] (*)

मार्णवयास्स साहसिकस्तपस्विने वामदेवनाम्ने निजराजलक्ष्मीं गुरुदक्षिणार्थं दत्वा(l.1) सर्वां भूमिं जेतुं प्रस्थितवान् ॥ 97.

चूडामणेस्तस्य महीपतीनां
चूडामणिज्ञोपि न वेद तत्वम्.(l.2)
अहं हि दैवज्ञदशानुगामी
दैवाभिगामी स तु तत्प्रतापः ॥

चूडामणिनाम दैवज्ञशास्त्रं(l.3) तत्र निपुणोप्यहमस्य राजशिरोमणे-

---

1 Ms. 'ध'. 2 Is it चीयमा'?

स्तत्वं न जानामि यतोहं देवस्तत्प्रतापस्तु वैवमप्य(1 4)तिवर्तते. यावान-स्य प्रतापस्तावान्वाङ्मनसातिक्रान्त इत्यर्थः ॥ 98.

यत्कार्मुकारोपणमात्र(1 5)यत्न-
सापेक्षमाशाविजयं विजानन्.
स भाग्यसंपत्परिवार एव
बभ्राम सामन्तशिखाम(1 6)णिर्गाम् ॥

धनुष्कर्पणमात्रप्राप्यं दिग्जयं जानन्स राजा भाग्यसम्पदेव परिवारो यस्य(1 7). केवल इत्यर्थः. स चक्रवर्ती भुवं यद्भ्रमत् ॥ 99.

विधास्यतस्साहसमानुचर्या-
च्छायामपि च्छे(1 8)त्तुमिवास्य रात्रौ.
विरोचने चुम्बति पश्चिमायां
पपात जातु त्रिपुरी पुरस्तात् ॥

रात्रौ साहसं(1 9) करिष्यतोस्य च्छायामप्यनुचरत्वाच्छेत्तुं वारयितुमिव सूर्ये पश्चिमदिग्गते सत्यग्रे त्रिपुरी(1 10) नाम प्राप्ता ॥ 100.

अयं पृथिव्यामपि पादचारी
कष्टं द्विपारिंसइ इवैकवीरः.
सहस्रपाद(1.11)स्मि दिवि प्रयामि
कथं रथेनेति रविर्ननाम ॥

द्वौ पादौ यस्य सोयं सिंह इवाप्रतिमल्ल(1 12)वीरो भुवि पादाभ्यां चरति. रथादि त्यक्त्वा चरतीति यावत्. अहं सहस्रपादस्मि अतो दिवि रथेन (1 13)कथं गच्छामीत्यस्मादिव रविरदर्शनं गत. ॥ 101.

---

1 Ms. 'मा'.     2 Ms. 'तमा'.     3 Ms 'ग्रा'.

क्षीणं नृपाकान्तमशुद्धपक्षे
दृष्ट्वा विसृष्टै(l 14)रिव सागरेण ।
प्रदीपितेजोवधदन्दशूकै-
रमुच्यत द्यौर्जलदैरकस्मात् ॥

कृष्णपक्षे क्षी(l.15)- 102.

[Lines 16 to end of page missing](**50)

कम्पितुमारम्भमकरोत् ॥ 103.

आजन्मनस्साहसंसादरत्वा-
त्स साहसस्यैव शुभं निमित्तम् ।(l 1)
यथार्थनामा पिशुनं विदित्वा
घने घनं गर्जति नन्दति स्म ॥

नित्यं साहसकरणात्सार्थकनामा स(l.2) राजा तन्निमित्तं बाहुकम्पं साहसस्यैव सूचकं ज्ञात्वा घनं कृत्वा मेघे गर्जति सति साहसि(l 3)को राजातुष्यत् ॥ 104.

ततो घनानां निचयैर्निशातै-
र्निश्शेषतस्तारकधाम्नि शान्ते ।
निशातनुत्वान्नि(l 4)शशाम नादं
निकाममायाविनमेष वीरः ॥

निविडैर्मेघैस्तारकाणां धाम्नि स्थाने तेजसि(l 5) वा शान्ते निशावसानादत्यर्थं विस्तीर्णं शब्दमेष वीरश्शुतवान् ॥ 105.

अथ ध्वनेस्संमुख(l 6)मस्य गत्वा
भयानकेनेव रसेन पूर्णाम् ।

---

1 Ms °ष्या 2 Is it °पते° ? 3 Ms °हसाद°. 4 Ms °तिनन्द° lc in top margin 5 Ms गजति. 6 Ms. °शस ना°, 7 Ms °मय°.

श्मशाननामानमसौ गभीरां
पुर्यास्त्रिपुर्याः परिखां(1.7)मपश्यत् ॥

सतोस्य शब्दस्य संमुखं गत्वासौ भयानकेन रसेन पूर्णामिव त्रिनामनग(1.8)रीसम्बन्धिनीं श्मशानाख्यां परिखामपश्यत् ॥ 106.

प्राणोयमिति कुलकम् ॥

प्राणोयिहो(1.9)त्रीकृतकालकार्म-
पुरत्रयाख्याहुतिपंचकस्य .
तृप्तिर्न्नृकीटेन मयापि का ते
ब्रह्माण्ड(1.10)कोटीशतघस्मरस्य ॥

श्यांकृष्टः पाशो यैस्तैः कालदूतैरिव खड्गहस्तैः पुरुषैः केशेषु गृ(1.11)-हीत्वा महाकालायतनं प्रवेश्यमानमेवं क्रन्दन्तं स राजा ददर्शेति सम्बन्धः . ग्रस्तकाल(1.12)कामत्रिपुराख्यपंचाहुतेस्तथा ब्रह्माण्डकोटीशतग्रासिनस्ते नृणां मध्ये कीटेन मया(1.13) का तृप्तिः ॥ 107.

सर्वाङ्गशुद्धस्य सुधारुचेर-
प्यालोकयामो हृदि कालिमानम् .
त्रैलोक्यकर्णा(1.14)- 108.

[Lines 15 to end of page missing](*)

शेषोपि बलैकरूपो
गोरक्षणं साहसिकः करोति .

तव दर्शनं यदप्राप्तं तत्तर्हि सहसा बले(1.1)न करणेन त्वयैव योमशोत्वं प्रापितः स प्रकाश्यताम् यो शेषो न शेषोपि बलैकरूपो बलसहायो हलधरसमोयं साह(1.2)सिको गोरक्षणं भूमिरक्षणं करोति ॥ 109.

---

1 Ms. स्नपा°. 2 Ms. पनिषा°. 3 Ms. प्रज्ञा°. 4 Ms. °कास°. 5 Ms °नेत्री°.
6 The verse referred to by this part of comm. is lost in the lacuna at the end of the page. 7 Ms. °क° to °र° h. on top margin. 8 Ms. °मदोदय°. 9 Ms. गोरक्ष lc. under 1.3.

यः कोपि वा साहसिकोस्ति लोके
यस्यास्ति वा क्षत्रियतावदाता .(13)
कृपाकृपाणाभरणोस्ति यो वा
स पातु मां मृत्युभयादमुष्मात् ॥

यो वा साहसिको यो(14) वा शुद्धक्षत्रियो वा दयाखड्गभूषणो दयामय इति यावत् सोस्मान्मृत्युभयान्मां रक्ष(15)[तु] ॥ 110.

[श्रुत्वेति त]त्कालगुरूभवद्भि-
र्मेघैस्स संक्रामणदीक्षयेव .
सौदामिनीदृष्टिभिरी(16)[क्ष्यमाणः]
——निर्घोषमिदं बभाषे ॥

तत्काले गुरूभवद्भिर्बहुलीभवद्भिश्च मेघैः(17)··············दृश्यमाणः अत्रोत्प्रेक्ष्यते संक्रामणं वधनिषेधे प्रेरणं तद्दीक्षयेवेति(18)··········[उ]क्तवान्······प्रतिपादनदीक्षाया हेतोरशिक्ष्यं दृष्ट्या पश्यति(19)······॥111.

[अरे वराकाः करुण]प्रलापं
भाग्यैर्दृशो गोचरमागतं मे .
विमुञ्चतेनं द्रुतमन्यथा व-
स्तदा(110)————दसिन् ॥

अरे वराकाः हे अधमाः करुणाक्रन्दितं स्वभाग्यैर्मम(111)······ ······गोचरमेनं यूयं त्यजत तूर्णम् अन्यथा यदि न यूयं त्यजथ तदा(112) ··········शिमितं(?) तद्युष्माकमा······ति स्यात् युष्मानुपहरामीत्यर्थः सम(113)············सेनापरिवारितम्···स(114) 112.

*(Lines 15 to end of page missing)(**51)*

* * * * * * * * *

---

1 Ms. 'कृपाभ'. 2 Ms सेरा'. 3 Ms 'हली'. 4 Ms. 'दृत्य'. 5 Ms. 'ष्ठा'. 6 Ms. 'ग्येट'. 7 Ms 'च्य'. 8 Ms. 'नप'. 9 Copyist's remark-अत ऊर्ध्वं त्रिचतुराणि पत्राणि गलितानीति भाति.

# [ सप्तमः सर्गः ]

* * * * * * *

एवेत्यपिशब्दार्थः. कुम्भोदरनामा भवान्या गणस्त्वं हिमाद्रिलतानां भवान्यां भगिनीनामिव य······[जाग](1.1)रूको भवसि ॥ 1.

अवलम्ब्य मृगाधिराजभावं व्रततीनामवता वनेभभङ्गम् ।
मय—⏑—⏑—⏑—(1.2)कदाचिद्विकृतं वासववारणो ररास ॥

सिंहरूपमभिनीय हिमाद्रिलतानां······[र](1.3)क्षता त्वया भयं प्रापित ऐरावणो विकृतं कृत्वा क्रन्दितवान् ॥ 2.

सदसि ध्वनितेन तेन ——⏑—⏑—[न](1.4)व्यकथामसङ्गभङ्गे ।
अशापद्विरदास्यशब्दशङ्काकुपिता पर्वतराजनन्दिनी त्वाम् ॥

······(1.5)न हरस्य कथाच्छेदे जाते गणपतिर्वृद्धिवमिति शङ्कया कुपिता गौरी त्वां सभाया·········(1.6), 3.

स्वरसेन यथा तथा वनेस्मिन्नसि राजेव समुद्यतो विहन्तुम् ।
परमेश्वरपाददूरवर्ती व्रज राजेव म(1.7)हीतले भवेति ॥

यथा तथानुचितं स्वातन्त्र्येण राजेव क्रीडितुमस्मिन्वने यत्त्वं प्रवृत्तोतो महेश्वरपाददूरव(1.8)र्ती त्वं भूतले राजेव भव ॥ 4.

शनकैस्सुहृदा निकुम्भनाम्ना तव शापावधिमर्थिता भवानी ।
अचल(1.9)त्मतिबिम्बिताभ्रमुक्ता धुनदीव प्रससाद चावदच्च ॥

---

1 Ms. °रा°. 2 Ms. भवान्या lc. on top margin. 3 Is it भवता अदनापितः क्ष° ? 4 Ms. °राज. 5 Ms. °सन्°. 6 Ms. °स्तंभ°. 7 Ms. lc. under 17.

ततो निकुम्भसंज्ञेन त्वदीयेन सख्या सवि(l.10)नयं शापावधिमर्थिता सती गौरी लोलैरभ्रैर्मुक्ता गङ्गेव प्रससाद च शापावधिं चावदत् ॥ 5.

उप(l.11)यास्यति भूमिपालभावं कलिकाले दशकन्धराततायी ।
इति निश्चलनिश्चयो यदासौ भविता स(l.12)म्भविता तदास्य मुक्तिः॥

कलावपि श्रीरामो राजत्वं प्राप्स्यतीति सनिश्चयः कुम्भोदरो यदा भवि(l.13)ष्यति तदा शापमुक्तिरस्य भविष्यति ॥ 6.

गिरिजागिरमीदृशीं निशम्य न्यमृशस्त्वं न ममास्ति शाप(l.14)शान्तिः ।
न हि कश्चिदयं स्फुरत्युपाधिः पृथिवीं येन कलावुपैति रामः ॥

एवं गौरीयचश्श्रुत्वा त्व(l.15)मेवं विचारमका............(l.16) 7.

[Lines 17 to end of page missing](*)

......य[दू]हीतं तन्नूनं तयैव वासनया लिप्तं त्वां मत्वा शत्रुहस्तिनो द्रष्टुं न शक्ताः ॥ 8.

गणकस्य गिरे(l.1)ति निर्विकल्पो नृपतिर्भूभरधारणानुतापम् ।
उदकण्ठत नीलकण्ठलीलावृषलाङ्गूलनभ(l.2)स्वतापनेतुम् ॥

दैवज्ञोक्त्या त्यक्तविकल्पो राजा हरक्रीडावाहपुच्छवातेन भूभारोद्वहनतापं निवा(l.3)रयितुमभ्यलषत् ॥ 9.

अजयत्पृथिवीभृतस्समस्तान्स षडङ्गेन बलेन सर्वकालम् ।
झटिति स्फ(l.4)टिकाचलं प्रतस्थे बलमष्टाङ्गमवाप्य योगनिष्ठम् ॥

स षडङ्गेन बलेन सदा राज्ञोजयत् अष्टा(l.5)ङ्गयोगं प्राप्य स्फटिकाद्रिं प्रस्थितवान् । राज्यादप्यधिकस्पृहो योगेभूदित्यर्थः । षड्भ्योष्टानामधिक(l.6)त्वादिति भावः पृथिवीभृच्छब्दस्य श्लिष्टत्वादुक्तिसंगतिः ॥ 10.

अथ गूर्जरराजमूर्जितानां मुकुटाल(l.7)ङ्करणं कुमारपालः ।
अधिगत्य सुतासुतं तदीयं परिरक्षन्नभवद्यथार्थनामा ॥

1 Ms. 'ङ्रेश'. 2 Ms. 'क्ति'. 3 Ms. 'म'. 4 Ms. 'ट'. 5 Ms. Read 'ज क'. 6 Ms. 'स्व'.

तेजस्विनां चू(l 9)डारत्नं गूर्जरेन्द्रं तदीयं दौहित्रं प्राप्य रक्षन्कुमारपालस्सत्यार्थनामाभूत्. कुमारोप्राप्तराज्यो रा(l 9)जपुत्रस्सोमेश्वरस्तस्य पालनान्नाम सार्थकम्. कुमारपालस्तदीयो भ्रातृपुत्रः ॥ 11.

प्रथमस्सुध(l 10)वासुतस्तदानीं परिचर्यां जनकस्य तामकार्षीत्.
प्रतिपाद्यजलाञ्जलिं घृणार्ये विदधे यां(l 11) भृगुनन्दनो जनन्याः ॥

घृणायां प्रतिपाद्यो जलाञ्जलिर्यस्यां तां निर्घृणां यां परिचर्यां शि-(l.12)रश्छेदात्मिकां [पर]शुरामो मातुः कृतवांस्तां परिचर्यां पूजां ज्येष्ठस्सुधवापुत्रः पितुः कृतवान्. पितुश्शि(l 13)रश्छेदमकार्षीदित्यर्थः ॥ 12.

न परं विदधे वृथा गुणित्वं जनकं स्नेहमयं विनाश्य यावत्.
स्वय(l.14)मेव विनश्य गर्हणीयं व्यतनोद्दीप इवानुरागगन्धम् ॥

स्नेहमयं जनकं केवलं न विनाश्य······(l.15)············विनाशं मरणं प्राप्य············यथा(l.16) 13.

[Lines 17 to end of page missing](**52)

—यन्तृसादिपत्तिव्यवहारेषु विसारिणा चतुर्धा.
युधि वीररसेन शुद्धिमन्तं न समीपादमुचत्कुमार(l 1)पालः ॥

रथादिषु चतुर्भिः प्रकारैर्विसरता वीररसेन शुद्धिमन्तं तं कुमारपालस्स्वसमीपान्नात्यजत् ॥(l 2) 14.

हनुमानिव शैलतस्स शैलं द्विरदेन्द्राद्द्विरदेन्द्रमुत्पतिष्णुः.
छुरिकामपहृत्य कुङ्कुणेन्द्रं गमया(l 3)मास कवंधतां तयैव ॥

शैलाच्छैलं हनुमान्यथोत्पतिष्णुस्तथा हस्तीन्द्राद्धस्तीन्द्रमारोहन्स कुङ्कु(l 4)णेन्द्रादेव छुरिकां हृत्वा तयैव छुरिकया कुङ्कुणेन्द्रं कबन्धतां प्रापयत् ॥ 15.

1 Sic. Read 'न्द्रस्'. 2 Is it घृणार्ये ? 3 Ms 'बंधक्षार'. 4 Ms. 'रच्छे'. 5 Ms 'क. 6 Ms. स्न'. 7 Read गर्थि' 8 Ms. कुणे' 9 Ms हेश'.

इति साहससाह(1.5)चर्यचर्यस्समयज्ञैः प्र[तिपादि]तप्रभावाम ।
तनयां स सपादलक्षपुण्यैरुपयेमे त्रिपुरीपुर(16)[न्द्]रस्य ॥

साहसानां साहचर्यं चर्या यस्य स दैवज्ञैः कथितप्रभावां तेजलस्य सुतां कर्पूरदे(1.7)वीं सपादलक्षैः पुण्यैरूढवान् ॥ 16.

इतरेतरचित्रचौर्यचर्याचतुरत्वेपि निकामनिर्विकारम् .(18)
परमेश्वरयोस्तयोर्युगं तत्सुतरामेकशरीरतामयासीत् ॥

तयोः परमेश्वरयोर्महाराजयोरिश(19)वयोश्च युगं कर्तृ एकशरीरतामैक्यमभेदं चागच्छत् अन्योन्यं चित्रस्य चौर्यचर्याहरणं तत्र जाग(1.10)रूकत्वेपि सति निर्विकारम् ॥ 17.

अविभावितभावभेदलेशौ निजनामादिपदाभिधेयकल्पैः .(1.11)
शिशिरीभवदाशयौ यशोभिः परितापं न कदाचिदूहतुस्तौ ॥

न विभावितोनुमितो भावस्या(112)न्योन्यरागस्य भेदलेशो ययोस्तौ तथा सोमेश्वरकर्पूरदेवीति निजनाम्नोरादिपदे सोमकर्पू(1.13)रशब्दौ तदर्थकल्पैर्यशोभिर्हिमीभवच्चेतसौ तौ तापं न······ ॥ 18.

अथ जातु हृदीव(1.14) सन्निधानं ददृशे स्वप्नविधौ विधातुकामः ।
त्रि~~~~~~~~~~~~~~~~~~~~~~(1.15) पद्मनाभः ॥

हृदये स्थिति कर्त्तुकाम इव स्वप्ने············(1 16) 19.

उदयावसरे हरेरभेदं ~~~~(1.17) 20.

[Lines 18 to end of page missing](*)

य प्रतिपादयांचकार ॥

साश्चर्यचित्तो राजा तत्स्वप्नद्वयं सृष्टिकर्तुस्सकलकर्मसाक्षिणे ज्योतिर्विदेव(1 1)र्णयत् ॥ 21.

---

1 i. e. 'लक्षस्य देशस्य पुण्यैः (See VI- 10) 2 Ms- 'शो. 3 Ms. 'ययो. 4 Ms 'वच'.

स जगाद यदेतत् नृपाग्रे क्षितिपस्तद्भविता चिरादमोघम्.
यदुपस्यवलोकितं(l.2) तु देव्यां कलितस्तस्य न कालतोतिपातः ॥

राजा प्रदोषे यदपश्यत्तच्चिरेण सफलं भविष्यति(l.3) यत्तु देव्या प्रात-र्दृष्टं[1] तस्य चिरकालत्वं नाकलितम् ॥ 22.

उचितामिव वाडवाग्निमैत्रीं मकराङ्कस्थि(l.4)तितः करोति भौमः.
गगने न ममास्ति कापि शोभेत्यधुना कुम्भमिवालसः प्रविष्टः ॥

मकरो रा(l.5)शिविशेषस्तस्याङ्को मध्यम्. मकराङ्कश्च समुद्रः. तत्र स्थित्योपपन्नां वाडवाग्निमैत्रीमिव भौमः क(l.6)रोति दीप्तो वर्तते इत्यर्थः. भौमस्य हि मकरराशिरुच्चस्थानम्. आकाशे मम न कापि शोभेत्यत इ(l.7)-वालसश्शनैश्चरः कुम्भं राशिविशेषं घटं च प्रविष्टः. अलसगामित्वादाकाशे शोभाभावः ॥ 23.

द(l.8)नुजारिमिवानुनेतुकामो दनुजानां गुरुरेति मीनराशिम्.
अधिरोहति मेषमेष पूषा तुरगा(l.9)णामिव खेदशान्तिकामः ॥

दनुजारिं विष्णुं प्रसादयितुकाम इव शुक्रो मीनराशिं समुद्रं(l.10) चैति तथाश्वानां विश्रमार्थमिवार्को मेषं राशिं······मध्यमधिरोहति ॥ 24.

विहसन्निव मेषराशिनं तं(l.11) वृषभं याति वृषाङ्कशेखरोपि.
उपलिप्सुरिवोभयस्वभावं मिथुनं संनिदधाति सोमसूनुः ॥(l.12)

मेषो हुडस्तद्गामिनं रविं हसन्निवेन्दुर्वृषं राशिमनड्वाहमपि आयाति वृषाङ्कशेखरत्वाच्चस्य वृष(l.13)स्थितिरु[चिता]············रिथररूपं प्रा-प्तुकाम इव बुधो मिथुने संनिहितः. द्विस्वभा(l.14)[व]·········[उभ]यो-र्रवीन्द्वोर्वा स्वभावमुपलब्धुकामो मिथुनं हि द्वन्द्वम् ॥ 25.

---

1 See Canto VIII, verse 46. 2 See p. 185, verse 31. 3 Ms. °नता°. 4 Ms. °नाति lc. under l.12. 5 Ms. °न्दो°. 6 Ms. °यु° etc. lc. under l 14.

तिमिरा(l.15)⌣⌣⌣⌣⌣⌣⌣⌣⌣⌣⌣मभ्युपैति .
पृथिवीम⌣वं शिखीति बुद्ध्या यजमानः(l.16) 26.

*[Lines 17 to end of page missing] (**53)*[1]

कुम्भाख्यराशिद्वये निषण्णम् . अन्योपि स्वकार्यमन्येन संपादितं संभाव्य स्वगृहे निष[ण्णो भव](l.1)ति . तुङ्ग इति पाठो नार्षः तयो राश्योस्तयोस्तुङ्गत्वासंभवात् प्रकृतार्थाननुगुणत्वाच्च ॥ 27.

अ⌣⌣⌣(l.2)भिरेष दीप्तिमद्भिस्तपनाद्यैः कलिकालिकां विहाय .
ध्रुवमेकपदे कृतीयुभूपुनृप पञ्चाग्नि [तपश्चरत्य](l.3)नेहा ॥

ध्रुवमयमनेहा कालः पञ्चाग्नि तपश्चरति . अत्र हेतुमाह . कृतीयुभूपुः कृतयु[गं भवितु](l.4)मिच्छुः कलिमालिन्यं त्यक्त्वा······भिर्दीप्तिमद्भिरु-······ ··[कृ]ती कृतकृत्यो भवि[तुमिच्छ](l.5)ति स मलं त्यक्त्वा पञ्चाग्नि तपश्चरति ॥ 28.

इति शुद्धिमति क्षणेत्र गर्भे स्वयमाधत्त हरिस्त्वमेव दे(l.6)व्याः .
अचिराद्भविता पुरस्तदेषा क्षितिरुन्मूलितरामराज्यगर्वा ॥

एवं शुद्धेस्मिन्क्षणे देव्या गर्भे(l.7) विष्णुस्त्वयं स्वमात्मानमधत्ताहितवान् तत्ततो हेतोरेषा भूमिरचिरेण त्यक्तरामभद्रराज्यदर्पा पुरो भ(l.8)-विष्यति . रामराज्यादप्यधिकस्य विभवस्य प्राप्तेः ॥ 29.

इति वादिनमादिनावसानं वसनाल(l.9)ङ्करणादिदानवर्षैः .
परितः परितोष्य पार्थिवस्तं गणकाग्रेसरमुत्सवं चकार ॥

एवं वा(l.10)दिनं तं गणकं वस्त्रादिभिस्संमान्य राजा प्रदोषं यावदुत्सवमकरोत् ॥ 30.

---

1 Ms. only one letter 'मि' or 'भि' in the middle of l.17. 2 Ms. 'कालि' lc. under l.3. 3 Ms. lc. marks here but no. lc. on margin. 4 Ms. 'तुरु'. 5 Ms. 'नंम'.

गणितासु गतासु या(l.11)मिनीपु प्रजगल्भे मुखपाण्डिमा स देव्याः .
उदरं विशतो हरेरपश्यत्स्वपती नाभिजुषो य(l.12)मम्बुजस्य ॥

स्वपती शयालुस्तोदरं प्रविशतो विष्णोर्नाभिस्थस्य पद्मस्य यं पाण्डिमानमपश्यत्स मुखपा(l.13)ण्डिमाल्पासु रात्रिपु गतासु सतीषु संक्रान्त इवेत्यर्थः ॥　　　　31.

शनकैश्शनकैश्शशाङ्कमुख्याः कृशभा(l.14)वोवयवेषु सार्वभौमः .
उदरस्य महार्घता भविष्यत्यतिरिक्तेत्युदपादि चिन्तयेव ॥

उदरस्या(l.15)धिका महार्घता भविष्यतीति चिन्तयेव कर्पूरदेव्या अङ्गेषु शनैश्शनैः कृशत्वमखण्डितमु(l.16)त्पन्नम् ॥　　　　32.

अपरेपि महस्विनः पृथिव्यां व्यवहर्तुं न यथारुचि क्षमंते .
इति गर्भगुणानिवाभ्यध(l.17)त्त क्रमशोस्याः प्रतिपद्य मान्यमग्निः ॥

अन्येपि तेजस्विनो यथारुचि यथाभिप्रायं यथादी(l.18)प्ति च भुवि व्यवहर्तुं न समर्था इत्येतान्गर्भगुणानिव जठराग्निर्मन्दतां प्राप्याभ्यधात् ॥ 33.

अ(l.19)चिरात्सवं नन्दनस्य भोज्या निखिला भूरिति शृण्वती जनेभ्यः.
यदसेवत मन्दयापि रुच्या [मृद](l.20)मास्वादमिवैक्षत क्षितेस्तत् ॥

रुचिर············यापि मन्दाग्निरपीत्यर्थः············(l.21)भि-···यद्बुभुजे तन्नूनं सा व············(l.22)······वी भूमेरास्वादं सा चर्व············　　　　34.

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~(l.23*)
उदरेण चिरेण जातमस्यास्त्रिवलीविप्रतिपत्तिपण्डितेन ॥

य एकमेव वलं वलाख्यमसुरमभिनत्तस्ये(l.1)न्द्रस्यायुधं वज्रस्तस्य

1 See above, verses 19 and 22.　　2 Ms. °चिरं°.　　3 Ms. °द्रुत.
4 Ms. °त्पु°.　　5 Ms. °मुरम° lc. on margin.
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

साम्यं त्यक्तवतो उदरेण जातमिति भावे क:. तिस्रश्च ता (1.2) वल्यस्त्रिवल्य: त्रयाणां वलानां समाहारास्त्रिवंली त्रिवलीनां त्रिवंल्याश्च विप्रतिपत्तौ पराभवे(1 3) [परिछ]तेन. एकवंलभेदी यस्तस्य त्रिवलीभेदिना सह महद्न्तरम् ॥ 35.

हरिमध्यरुचिं जयत्यधस्ता(1 4)त्सति मध्ये करिकुम्भकल्पयोर्नौ.
अभवद्गुचिरथ सास्ति नेति स्तनयोश्श्यामुखत्वमाविरासीत् ॥(1 5)

हरिसिंहस्तस्य मध्यमुदरं तस्य शोभां कृशत्वाज्जयत्युदरेधस्तात्सति हस्तिकवादसदृशयोराव(1 6)योर्या शोभा पूर्वमासीत्साद्य नास्ति. गर्भेण मध्यस्य स्थौल्यादिति भाव.. इतीव स्तनयोरश्यामुखत्व(1 7) चूचुककाष्ण्यं कालमुखत्वं चासीत् ॥ 36.

मुखमग्निमुशन्ति यस्य सन्तो भविता तेन पुनः स्तनन्धयेन .(1.8)
नृपवामदृशस्तु पूर्वमेव स्तनयोश्श्यामिकया मुखं चुचुम्बे ॥

सन्तोग्नि यस्य मुखमुपदिशन्ति(1 9) तेन विष्णुना पुन: पश्चात्स्तनपायिना भविष्यते श्यामिकया तु देव्या: स्तनयोर्मुखं प्रागेव चुम्बि(1 10)तम्. अग्नि. कृष्णवर्त्मा स यत्र प्राप्नोति तत्र पश्चाच्छ्यामिका भवति अत्र तु विपर्यय: ॥ 37.

विनिवे(1 11)शयति स्म यत्र चास्मात्कथमप्युत्क्षिपति स्म पादयुग्मम्.
सुचिरस्य भुवेव भाविवध्वा प्रतिवि(1 12)न्यासमतिप्रणम्यमानम् ॥

सा यत्र च स्थाने पादद्वयमक्षिपदस्मात्स्थानात्सा पादद्वयं कष्टेनोद्(1.13)क्षिपद्भाविन्या स्नुषया भुवा न्यासे न्यासे प्रणम्यमानं कृतप्रणाममिव ॥ 38.

रविणा शशिनं भृतं(1 14)कलाभिस्सकलैरेव करैरिवार्पिताभिः.
दधतीं कमलां सहस्रपत्रं स्वमुखस्योपरि सा द(1.15)दर्श सुप्ता ॥

1 Ms वत्रादपि कृपेनयदं crossed after 'ता. 2 Ms 'व'. 3 Ms. 'सद्यो'.
4 Ms 'नस्त' 5 Ms. '-स्ना'.

सकलैस्सहस्रसंख्यैः करैरर्पिताभिस्सहस्रसंख्याभिः कलाभिर्भृतं पूरि-(1.16)तं चन्द्रमिव सहस्रपत्रं पद्मं स्वमुखस्योपरि धा[रयन्तीं लक्ष्मीं साप]-श्यत् ॥ 39.

ज्वलदा(1.17)ननलम्बिदन्दशूकं विहगं जातु ददर्श हेमपक्षम् .
विगलद्यमुनार्कबिम्बदिग्धं पुरतो(1.18) मेरुमधीरतामिवाप्तम् ॥

ज्वलति दीप्ते आनने लम्बी दंदशूकस्सर्पो यस्य तं तथा हे(1.19)मम-यपक्षं विहगं गरुडमधीरतामाप्तमपश्यत्. अत्रोत्प्रेक्ष्यते विगलंती यमुना य(1.20)·········बिम्बेन दिग्धं सहितं सुमेरुमिव. गरुडस्थानीयो मेरुः अर्कस्थानीयं मुखम्(1.21) [सर्प]स्थानीया यमुना ॥ 40.

वलयीकृत[भोगशेषतल्प]स्थितमात्मानमलक्षयत्कदाचित् .(1.22)
[गुरुगर्भभरोष्मणः शमाय त्वरितं]⏑ ⏑ – ⏑ –[प्रविष्ट]म् ॥

सा देवी आत्मानं वलयी(1.23··51)कृतो भोगः कायो येन तथाविधे शेषे एव तल्पे स्थितमपश्यत् अतस्संभाव्यते गुरुर्यो गर्भभर(1.1)स्तेन ऊष्मा तापस्तस्य शमार्थं तूर्णं चन्द्रमण्डलमिव प्रविष्टम् ॥ 41.

स्वमवैक्षत चन्द्रकान्तशाला(1.2)वलभीशृङ्गनिषण्णं कदाचित् .
उपदर्शनवाञ्छयोपनीतं धवलद्वीपमिवोदरस्थिते(1.3)न ॥

सा जातु स्वात्मानं चन्द्रकान्तमये शालावलभीशृङ्गे निषण्णमारूढ-मपश्यत् अतस्सं(1.4)भाव्यते उदरस्थितेन हरिणा दर्शनार्थं श्वेतद्वीपमिवा-नीतम् ॥ 42.

अथ पुष्पशरस्य बन्धुमन्यं(1.5) पृथिवीं माधवमभ्युपेष्यतीति .
उपयोगमपश्यतीव किञ्चित्स्वगतं गच्छति माधवे संमा(1.6)प्तिम् ॥

---

1 Ms. 'स'. 2 Ms. 'भीरन्'. 3 Ms. 'रु'. 4 Ms. सुमे crossed and 'न' written under it. Is it 'तं सुमेरु' ? 5 Ms. ! c- mark after 'd. 6 Ms. न'. 7 Ms. has ६ on margin. 8 Ms. अन. 9 Ms. 'अप'. 10 Ms. 'वरु'.

जनकत्वोदुद्दीपकत्वाद्वान्यं लोकोत्तरं कामस्य बान्धवं विष्णुं भूः प्राप्स्यतीत्य(1.7)वस्वात्मानमनुपयुज्यमानं पश्यतीव माधवे वैशाखे समाप्तिं गते ॥ 43.

तमसः प्रशमाय(1.8) सत्त्वमूर्तेरवतारावसरं विविञ्चतीषु ।
कलिबन्धुतयेव बिभ्रतीषु कृशिमानं क्रमशस्तम(1.9)स्विनीषु ॥

कलिबन्धुभावेन हेतुना तमसः पापस्यान्धकारस्य च शमनार्थं सत्वमूर्त्तेर्विष्णोरवतारसमयं विमृ(1.10)शन्तीष्विव तमस्विनीषु रात्रिषु कृशिमानं तुच्छत्वं क्रमेण धारयन्तीषु । तमस्विनीष्विति सा(1.11)कृतम् ॥ 44.

अचिराद्दिवसेश्वरस्य वंशः परमामृद्धिमवश्यमेष्यतीति ।
दिवसेषु विकस्वरीभव(1.12)त्सु स्मयमानेषु च पुष्कराकरेषु ॥

सूर्यवंशोऽचिराद्वृद्धिं प्राप्स्यतीत्यत एव दिनेषु वर्धमा(1.13)नेषु सत्सु पद्मसरस्सु च विकसंत्सु सत्सु ॥ 45.

नरकद्विपि[1] भूधरोज्जिहीर्षां[2]जुषि सोमेश्वरवल्लभोदरस्थे(1.14) ।
अलसालसगामिनीव शून्यं जलधिं द्रष्टुमिवाक्षमे दिनेशे ॥

दिनेशेऽर्केऽलसालसं(1.15) गच्छति सति अतस्संभाव्यते भूमिभारोद्धरणेच्छाधारिणि हरौ देवीगर्भस्थिते शून्यं संप(1.16)न्नं जलधिं द्रष्टुमसमर्थे ॥46.

सलिलेपि शयालुना विमुक्ता नृपदारोदरगोचरे(1.17)ण निद्रा ।
दिवसेष्वनुगन्तुमाविशन्त्यामिति तस्यामपुमेव जीवलोकम् ॥

समुद्रे उचित(1.18)निद्रेणापि नृपदाराणामुदरे गोचरो यस्य तेन समुद्रे निद्रा त्यक्तेति तस्यां निद्रायामर्थाद्विष्णुं(1.19)मेवानुगन्तुममुं जीवलोकं दिनेष्वाविशन्त्याम् ॥ 47.

1 Ms. °मसुतमधि°. 2 Ms. क° to °ना lc. under l 9. 3 Ms. त्रिवसिषु. 4 Ms. न° to °पि lc. on margin. 5 Ms. °षु च after °षे. 6 Ms. °न्यपदासो°. 7 Ms. मुक्त° crossed after °ण. निद्रा on margin. 8 Ms. °मुम°. 9 Ms. सुसेववि lc. after °ष्णु° on margin. Is it °ष्णुं सुसेवितुमे° ? 10 Ms. °मन्तु°. 11 °मन्तु° crossed after °न्तु°.

निवसत्यपरत्र पुष्करा[क्षे सकलं मा स्म](1.20) पिबत्पयोधिमौर्वः .
इति हैमवतीभिरद्भिरर्के तमिवापूरयितुं विशत्युदीचीम् ॥

अन्यत्र(1.21) विष्णौ वसति सति वडवाग्निरशेषं समुद्रं मा स्म पिबदित्यत इव हिमाद्रि············(1.22)पूरयितुमुत्तरादिशं रवौ प्रविशति सति ॥ 48.

मणिदीपपतत्पतङ्गमालाद ⏑——⏑ [विभा](1.23)वितानुभावैः .
प्रविवेश पुरः कृतप्रवेशं शकुनैरि ⏑ ⏑—⏑—⏑— .

·······[प](1.24*)तन्तीनां पतङ्गमालाना············विभावितो दृष्टोनुभावः स्वभावो येषां वैरशकुनैराश्रितं म(1.1)नोहरं सूतिकावासं देवी प्रविष्टा ॥ 49.

ज्येष्ठत्वं चरितार्थतामथ नयन्मासान्तरापेक्षया
ज्यैष्ठस्य(1.2) प्रथयन्परन्तपतया ग्रीष्मस्य भीष्मां स्थितिम् .
द्वादश्यास्तिथिमुख्यतामुपदिशन्भानोः प्रतापो(1.3)न्नतिं
तन्वन्गोत्रगुरोर्निजेन नृपतेर्जज्ञे सुतो जन्मना ॥

ज्येष्ठे मासि निजेन जन्मनोत्पत्त्यान्यमासे(1.4)भ्यो ज्यैष्ठमासस्य ज्येष्ठत्वं यथार्थतां कृतफलतां नयंस्तथा परन्तपतया वैरितापनेन च ग्रीष्मस्य भीष्मां स्थितिं कुर्वन्द्वा(1.5)दश्यां जन्मना तस्यास्तिथिषु प्राधान्यं दिशन्गोत्रादेर्भानोः प्रतापोन्नत्यं कुर्वन्सुतो राज्ञो जातो ज्येष्ठत्वं(1.6)·········[इ]ति व्याख्यानं न संगच्छते ज्यैष्ठ इति व्युत्पत्तिसिद्धेः ॥ 50.

निश्शेषाणां शिवा(1.7)नामुपरि कृतपदस्साहचर्याधिकारी
सर्वस्यास्तीर्थजातेस्सकलसुरतरुग्रामणीसो(1.8)दरश्च .

1 Ms. 'विप्रेष- 2 Ms. 'न्दुदे'. 3 Ms. 'तद्र्मा'. 4 Ms. 'वैः. 5 Ms 'द्माना'. 6 Ms. 'ह'. 7 Ms. 'वो'. 8 Ms. ह' [illegible] 'र्त्सं lc. under 1.4. 9 Ms. 'पत्त'. 10 Ms. मुत्काऽहेत्ये'.

बालः कोप्येष राजत्वमुपगतवानित्यकस्मात्सरस्व-
त्यस्मिन्नुत्पन्नमात्रे मुखमल(l.9)मकृत व्योमपूर्वेर्मृडस्य ॥

सर्वेषां शिवानां श्रेयसामुपरि कृतं पदं चरणं(l.10) येन तथा सर्वतीर्थानां साहचर्याधिकारी तुल्यः पवित्रत्वात्सर्वेषां कल्पवृ(l.11)क्षप्रधानानां सोदरश्चैष बालः कोप्यङ्कुलेपूर्वो राजा चेन्द्रश्चेति सरस्वती वीणी व्योमरूपस्य(l.12) भगवतो मुखमभूषयत्. आकाशाद्वाग्गुश्चरितेत्यर्थः. चन्द्रो ह्येकस्यैव शिवस्य शिरसि(l.13) स्थितः अयं तु सर्वेषां शिवानां. चन्द्रो गङ्गाया एकसहचरः अयं तु सर्वस्यास्तीर्थ(l.14)जातेः. स पारिजातस्यैव सोदरः अयं तु सर्वेषां कल्पवृक्षाणामिति भद्रम् ॥(l.15) 51.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ वि(l.16)श्रम्य [रम्य]श्रियि.
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शास्त्रोदजखे(l.17)दमेदुरमतिर्ज्योत्स्नाकरो लावणिः ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजा(l.18)त्मजो विवरणेन स जोनराजः.
सर्गं सुखं व्यधित सप्तममत्र पृथ्वी-
राजाख्यराजवि(l.19)जयाभिधकाव्यराजे ॥

पृथ्वीराजविजयविवरणे सप्तमस्सर्गः ॥(l.20)

---

1 Ms. राजा°. 2 Ms. सु°. 3 Ms. व्योव°. 4 Ms. श्रेयसांपुर°. 5 Ms. Copy leaves space between सु° and °प°. and before °चे but no letter seems missing. [illegible] Ms. °रजः. 7 Ms. वा°. 8 Ms. °चे. 9 Ms. °जे च°. 10 Ms. वर्जा. 11 Ms. व्यास°. 12 Ms. °क्रियो°. [illegible] Ms. °ट°.

## [ अष्टमः सर्गः ]

अथ शब्दगुणं व्योम सत्यमित्यवदन्निव ।
सङ्गीतकप्रसङ्गेन पुरन्दरपुराङ्गनाः ॥

अ(I 21)थाप्सरसो[1] गीतातिशयेनाकाशं शब्दगुणं सत्यमित्यकथयन्निव ॥ 1.

दिव्यदुन्दुभिजीमूत(I 22)———भाविनी ।
पुष्पवृष्टि[र]रोचिष्ट किञ्जल्कतडिदुज्ज्वला ॥

दिव्यदुन्दुभिरेव जी(I 23)·········नी तथा किञ्जल्क एव तडित्तयोज्ज्वला पुष्पवृष्टिरशोभत ॥ 2.

पुष्पवर्ष(I 24)मिलद्दिव्यभृङ्गपक्षसमीरणैः ।
[प्रमृ]ष्टानीव यान्ति स्म दिङ्मुखानि प्रसन्नताम् ॥(I 25**5)

पुष्पवर्षे मिलन्तो ये दिव्यभृङ्गास्तेषां पक्षवातेन प्रमृष्टानीव दिङ्मुखानि प्रसादं प्रापुः ॥(I 1) 3.

ईलन्तं कुलकम् ॥

सनाथां पृथिवीं मत्वा राजपुत्रस्य जन्मना ।
रजोपि पस्पृशुस्तस्यास्त्रासा(I 2)दिव न मारुताः ॥

राजपुत्रेण जातेन सस्वामिकां पृथ्वीं[6] संभाव्य भयादिव वायवो रजोपि भूमेर्न [प](I 3)स्पृशुः ॥ 4.

अकाण्डे न भवेष्टव्यं प्रजास्विति हविर्भुजा ।
मृत्युर्न्यपत्यतेवार्चिःकराग्रैर्दक्षिणाभु(I 4)खैः ॥

---

1 Ms °प्सरो. 2 Ms. पु° to °त lc. under l.25. 3 Ms has इ on margin.
4 See verse 10 below. 5 Ms. स्वस्मा°. 6 Ms °इ पृथ्वीं lc. under l 3.

भवता प्राणिषु प्रवेशोसमये न कार्य इत्यमिना दक्षिणामैर्ज्वालाहस्तैर्निषिद्ध(l.5) इव . यमस्य दक्षिणाशापतित्वाज्ज्वालानां दक्षिणप्राणां निषेधकत्वमुचितम् ॥(l 6) 5.

स्ववंशयमेलकोत्कर्षं पश्यन्तौ शशिभास्करौ .
यशःप्रतापवैशद्यदीप्तिपात्रीवभूवतुः ॥(l.7)

निजकुलजातयोस्संगमेनोत्कर्षं पुत्रजन्मलक्षणं पश्यन्तौ यशःप्रतापाभ्यामिव वैशद्यकीर्त्योः पात्रीवभूवतुः ॥(l.8) 6.

गुणवद्भिर्वृता लक्ष्मीः पद्मैरस्मत्प्रसूतिभिः .
इति वैमल्यमाजग्मुरव्याजं सलिलाशयाः ॥(l.9)

अस्मज्जातैर्गुणिभिः पद्मैश्च श्रीर्वृतेत्येव सरांसि वैमल्यं गुणं प्रापुः ॥ 7.

विभाव्य स्वामिनः प(l.10)त्नीं समुत्पन्नजगन्निधिम् .
भूरप्यसूययेवाभूद्रोद्भिदुरशेवधिः ॥

समुत्पन्नो जग(l.11)न्निधिर्विष्णुर्यस्यास्तां महिषीं विमृश्य स्पर्धयेव भूरपि प्रकटीकृतहेमकुम्भाभूत्(l.12) . हेमकुम्भप्रादुर्भावोक्तिर्बालरक्षणौचित्यादत्यर्थं संगच्छते ॥ 8.

धर्मकर्मक्रियाविघ्न(l.13)हरे जाते नृपात्मजे .
प्रसेदे यजमानानां न केषामन्तरात्मना ॥

यज्ञादिविघ्नहरे(l.14) पुत्रे जाते सति सर्वेषां याज्ञिकानां चित्तेन प्रसादः प्राप्तः तज्जन्मना चेतः प्रसन्नमभू(l.15)दात्मनः प्रसन्नत्वादिति भावः ॥ 9.

इति विष्णुमयं मूर्त्तिभेदं मानुषतां गतम् .
मत्त्वेव दे(l.16)वदेवस्याप्यनन्दन्ताष्टमूर्तयः ॥

---

1 Ms. 'कार्य. 2 Ms. 'कनु'. 3 See Supra, Canto I. 34. 4 Ms. lc. under lc. 7. 5 Ms. हस्यो: on margin. 6 Ms. 'तेषु'. 7 Ms. श्रीर्'. 8 Ms. lc. under l.10 9 Ms. दक्षि'.

हरिमवतीर्णं मत्वाष्टमूर्त्तेरष्टौ मूर्त्तयोतुष्यन्निवेत्थम् .(1 17) क्षित्यादीनां रजोभावादावानन्दोत्प्रेक्षणम् ॥ 10.

नृत्यन्तीनां सुरस्त्रीणां त्रुट्यद्भिर्हारदाम(1.18)भिः .
जेतुं मरुत्तसम्राजं मुक्तावर्षं इवाभवत् ॥

नृत्यवशाच्छिन्नैर्हारैर्हेतुभिर्मुक्ता(1 19)वर्षं मरुत्तं राजानं जेतुं जितं कर्तुमिवाभूत् . अन्तर्भावितण्यर्थोत्र जयति. ॥ 11.

प्रक्रान्त(1.20)मित्याद्यष्टभिः कुलकम् ॥

आहृतैर्व्योमगङ्गातो वातेन कनकाम्बुजैः .
नृत्तप्रवृत्तनागा(1 21)रिभ्रंष्टपत्त्राङ्किता इव ॥

आकाशगङ्गातो वातेनानीतैस्सुवर्णपद्मैर्हेतुभिर्नृत्यद्ग[रुड](1.22)पतत्पक्षभूपिता इव ॥ 12.

स्वनितेन मृदङ्गानामप्सरो[नृत्त]योलिना .
लक्ष्मीमहो[त्सवोत्साह](1 23*)गर्जदैरावता इव ॥

अप्सरसां नृत्ते जातेन मृदङ्गशब्देन हेतुना श्रीमहोत्सवे उत्साहेन गर्जन्नै(1.1)रावणो यासु . पत्युरवतारान्महोत्सवः . स्त्रियो हि भोगलम्पटत्वाद्भर्त्तारमनेकरूपमिच्छन्ति .(1 2) ऐरावणस्य गर्जनं लक्ष्म्या गजवाहत्वात् ॥ 13.

नृत्यद्देववधूवक्त्रगलद्धर्माम्बुशीकराः .
पृथिवीं(1 3) सुधया सेक्तुं प्रवृत्तेन्दुशता इव ॥

नृत्यन्तीनामप्सरसां मुखेभ्यो गलन्तो घर्मकणा यासु ताः(1 4) भूमिममृतेन सेक्तुं वर्षितुं प्रवृत्तानीन्दुशतानि यासु ता इव ॥ 14.

---

1 One verse missing See Notes  2 Ms °चमासाज्या  3 Sic. It should be प्रक्रान्तमित्रमष्टाभिरित्यन्न for there are 10 verses, not 8  4 Ms. °रिभ्रं°. 5 Comm °वधा  6 Ms. °वृष्टे इ°  7 Ms भूमि°.

उत्सवालोकनायातब्रह्महं(1.5)सपरिच्युतैः .
पत्त्रांशैर्विगलत्पूर्वराजकीर्त्तिच्छटा इव ॥

उत्सवस्य वीक्षणार्थमागतस्य(1.6) ब्रह्मणो हंसेभ्यः पतितैः पत्त्रकणैर्हेतुभिः पतन्ती पूर्वराजानां कीर्त्तिच्छटा याभ्यः . तत्कीर्त्त्यपेक्ष(1.7)या पूर्वराजकीर्त्तेरल्पत्वाद्विगलनम् ॥ 15.

ध्वनिभिर्दिव्यशङ्खानामसंख्यैर्मुखरीकृताः .
स्वं(1.8)कुल्यैः पाञ्चजन्यस्य गीयमानगुणा इव ॥

अगणितदिव्यशब्दमुखराः पाञ्चजन्यस्य वं(1.9)श्यैर्हरेर्गुणा गीयमाना यासु ॥ 16.

अनभ्रवर्षपृषतैः प्रसवद्भिस्सहस्रधा .
पटवास(1.10)कषायाक्षचन्द्रांशुकलुषा इव ॥

मेघान्विना वर्षकणैः पतद्भिस्सहस्रसङ्ख्यैः कर्पू(1.11)रादिक्षोदकलुषितनेत्रेन्दुवाष्पाविला इव ॥ 17.

दास्यत्यानन्दितो भास्वान्कस्मैचिद्यदि वा(1.12)जिनः .
तदनूरुगतिः का स्यादिति वाचालचारणाः ॥

स्वकुले हरेरवतारेण हृ(1.13)ष्टोर्कः कस्मैचिद्यश्वान्दास्यति तदाऽविद्यमानोरोररुणस्य गतिः केति मुखरचारणाः ॥(1.14) 18.

प्रगीतरोहिणीवक्त्रप्रसभारोहणोत्सुकम् .
स्खलाञ्छनमृगं रोद्धुमपि व्यग्रसुधाकराः ॥(1.15)

गातुं प्रवृत्ताया रोहिण्या मुखे बलेन रोहणे लुब्धं स्वाङ्कमृगं रोद्धुं सुधाकरोऽपि व्यग्रो(1.16) यासु ॥ 19.

---

1 Ms. कीर्त्ते°. 2 Is it सङ्ख्ये? 3 Ms. पाञ्च°. 4 Read °स्वाङ्कमृग°. 5 Ms. °न्त्र°. 6 Ms. °नश्र°. 7 Ms. °स्य-अन्दिनो. 8 Ms. °मित. 9 Ms. °रय°. 10 Ms. °कर°. 11 Ms. वर्ष.

प्रसृतैर्मृगशीर्षस्य चन्द्रशुद्धान्तसीमनि .
स्वगीतपरगीताभ्यामानन्दाश्रुभि(1 17)रुच्छिताः ॥

चन्द्रावरोधेषु निजगीतेन परगीतेन च निर्गतैर्मृगशीर्षस्य हर्षवाष्पै(1.18)-
रिसक्ताः ॥ 20.

प्रमोदाश्रुप्रवाहेण देवानां क्षालिता इव .
अतिप्रसन्नतां जग्मुर्गलत्क(1 19)लिमला दिशः ॥

देवानां हर्षवाष्पस्रोतसा धौता इव दिशो गलत्कलिमलो याभ्यस्ताः
(1 20)[प्रस्ता]दं प्रापुः ॥ 21.

प्रक्रान्तमेत्रमष्टाभिर्दिक्पालैः प्रमदोत्सवम् .
सुरैस्तद्वीर्यपिण्डस्य नृ(1 21)[प]तिर्निरवाहयत् ॥.

एवं लोकपालैरारब्धं पुत्रस्य संबन्धिनमुत्सवं तेषां लोकपालानां(1 ...
..56[5])वीर्यस्य पिण्डस्य राशेः पुत्रस्य राजा समापयत् . पिण्डस्य चाष्टा-
ङ्गानि[7] ॥ 22.

[अदेयमपि यत्] प्रादादनर्थिभ्योपि पार्थिवः .
अशो(1 1)धयदृणं पित्र्यमिति किं नाम कौतुकम् ॥

अदेयं छत्रचामराद्यप्ययाचद्भ्योपि राजादात्(1 2) पितॄणामृणमशोधय-
दिति नाश्चर्यम् . पितरो ह्यर्थिनः पितॄणां चर्णशुद्धिरवश्यं कार्या. अ(1 3)यमर्थः
ऋणमस्मै सन्नमतीति[8] वाक्यात्पुत्रे जाते पितुर्ऋणान्मुक्तिः पित्रा गृहीतं च
ऋणं(1 4) पुत्रश्शोधयतीत्यर्थान्तररर्पितम् ([9]) ॥. 23.

ददाने नृपतौ रत्नचामीकरकरम्बकम् .
त्रिमुक्ति(1 5)मौक्तिकप्रायैरपि वद्धैरवाप्यत ॥

---

1 Ms. °तैमृग°. 2 Ms चन्द्र°. 3 Ms °ष्क° 4 Ms. °मिनिर°.
5 Ms पु on margin. 6 Ms. राशि 7 °स्य, °अस्य, पिण्डस्य चाष्टाङ्गानि lc above l. 1; पु° lc. under l 1. 8 ऋणमस्मिन् सनयति Aitareya Br. 7-13 4, Shankhayana Shr. Sutra, 15 17. 9 Ms. °त्रेपते. 10 Is it °त्वर्थान्तर-भाषितम् (!)? The figure is अर्थापत्ति.

राद्वि रत्नादि वदति यद्वैराभरणीकृतैर्हारादिभिर्विमुक्ति कण्ठा(16)देरवरोहणं प्राप्तम् निजकण्ठहारा अपि दत्ता इत्यर्थ . अपि शब्दात्कारावद्धाना मुक्ति (17) किमर्थमाख्यायते इत्यर्थापचिरार्था ॥ 24.

उद्यत्कर्पूरकस्तूरीकश्मीरजरजश्छलात् (18)
मुक्त्वेव वैरमन्योन्यं दृष्टं ज्योत्स्नातमोरुणैः ॥

उत्तिष्ठत्कर्पूरादिधूलिव्याजाज्ज्योत्स्नादिभिर्वैरं त्यक्त्वा(19)न्योऽन्यमिव दृष्टम् तत्काल भयवशात्सर्वं राजादिभिर्वैरत्याग. कृत इति भाव ॥ 25.

असाध्य(110)मित्यादि कुलकम् ॥

असाध्यं कोशता प्राप्तैर्मेरुरोहणसागरैः .
अशक्यं निधिनाथे(111)न कोशाध्यक्षत्वमीयुषा ॥

असाध्यमित्यादि महोत्सवविशेषणम्. कोशीभूतैर्मेरुमुखै करणैरन्ये-(112)नासाध्य कर्तुमशक्त तथा कोशाध्यक्षेण वैश्रवणेनाशक्यम् ॥ 26.

कष्टं कल्पद्रुममयैर्निष्पा(113)द्यमपि निष्कुटैः .
क्रीडाद्रिभिरनिर्वाह्यं चिन्तामणिमयैरपि ॥

कल्पवृक्षकृतैर्गृहारा(114)मै कष्टेन सपाद्यम् चिन्तारत्नमयैश्शैलैरप्यशक्यम् ॥ 27.

अवाप्ते कामधेनूनां विराट्त्वे(115)पि दुर्घटम् .
रक्ताभिरपि दुस्साधंमणिमादिभिरष्टभिः ॥

कामधेनूना विराट्त्वे वि(116)राटराजभावे प्राप्तेऽप्यशक्यम्. सरागाभिरप्यष्टभिरणिमादिभिस्सिद्धिभिरशक्यम् शक्ति(117)भिरित्यार्ष पाठ ॥ 28.

---

1 Ms व पै 2 Ms 'हांपि भि' lc under l 6 3 Ms. 'जन्त' 4 Ms. 'तैव 5 Ms 'भि' 6 Ms 'तैमे' 7 Ms दिभि' 8 Ms 'ध्याप्य' corrected to 'स्ताप' 9 Ms मासे ॥ on margin 10 Where can it fit in the text ? 'भि ग्रचिभि would be no worse than 'दिभि सिद्धिभि.' Or, is some one criticising the commentary ?

स्वप्रकर्षपरीतार्थमुपदिष्टमिव श्रिया .
निर्माय पृथिवीपालः पु(l 18)त्रजन्ममहोत्सवम् ॥ 29.

पृथ्वीं पवित्रतां नेतुं राजशब्दं कृतार्थताम् .
चतुर्वर्णधनं नाम पृ(l 19)थ्वीराज इति व्यधात् ॥

स्वमाधिक्यं दर्शयितुं लक्ष्म्यैवोपदिष्टं पुत्रजन्ममहोत्सवं कृत्वा रा-(l 20)जा भूमिं पवित्रयितुं राजशब्दं च चरितार्थतां नेतुं पृथ्वीराज इति चतुरक्षरं पुत्र[ना](l 21)माकरोत् ॥ 30.

पूर्णैः पुण्यैस्तमुत्सङ्गे कृत्वा कारणमानुषम् .
पूर्णपुण्याभवद्धा[त्री पवित्र](l 22)त्वमवाप च ॥

म्लेच्छवधेन कारणेन मानुषं तं पृथ्वीराजं पूर्वपुण्यैरगण्यैरङ्क·······
···(l.23*)· · · ······पूता चाभूत् ॥ 31.

यथाकामार्पितार्थित्वं यद्बालस्यैव(l 1) पप्रथे .
तन्मन्ये सुरभिस्स्तन्यं तस्मै धात्रीतनुर्ददौ ॥

तस्य बालस्यैव सतोऽर्थिनां कामपूरणं(l 2) यत्प्रसिद्धं तस्मादहमेवं मन्ये धात्रीरूपा कामधेनुस्तस्मै स्तन्यमदात् . स्तन्यप्रदानानुसारेण वास(l 3)नानुषङ्गात् ॥ 32.

स्तनं श्रीखण्डधवलं कस्तूरीलिप्तचूचुकम् .
पपौ दक्षिणपूर्वाभ्यां दि(l 4)ग्भ्यां सारमिवार्पितम् ॥

श्रीखण्डेनेव श्वेतं कस्तूरीलिप्ताग्रं स्तनं स पीतवान् दक्षिणपू(l 5)र्वाभ्यां दिग्भ्यामर्पितमिव सारम्, तयोस्तदुत्पत्तेः ॥ 33.

वभौ स्तनस्य गौरस्य मुखे गृह्णन्स(l 6) चूचुकम् .
कलङ्करूपं हृच्छल्यं शशाङ्कस्योद्धरन्निव ॥

---

1 Ms पृत्रा. 2 Is it °र्थिता (Raghu, I 6)? 3 Ms °स्तस्मै ‍is under l 3.
4 Ms. °प्रदानु°. 5 Ms. पपे

गौरस्य स्तनस्य चूचुकमास्ये गृ(। 7)ह्णन्स हृन्छल्यं कलङ्कं चन्द्रस्यां-द्धरन्निवाशोभत . स्तनश्चन्द्रत्वेन चूचुकं कलङ्कत्वेन संभावितम् .(। 8) मुख-मिति पाठो न तथार्पः ॥ 34.

तस्य धात्रीकुचाज्जातु कुङ्कुमं वदनं विशत् .
गाढतां शा(। 9)रदादेशानुरागं हृदयेनयत् ॥

धात्रीस्तनान्मुखं प्रविष्टं कुङ्कुमं कर्तृ शारदादेशे(। 10)नुरागं मूर्त्तता-मिव चित्ते नीतवान् ॥ 35.

वंशशुक्तयुद्भवान्धात्रीहारमुक्तामणीन्स्पृशन् .
गि(।.11)रिसागरसारस्य ग्राहित्वं तत्करोग्रहीत् ॥

वंशाच्छुक्तेश्चोत्पन्नान्धात्रीहारमणीन्स्पृशंस्त(। 12)त्करोद्रिसमुद्रसारमा-हित्वं गृहीतवानिव . स्तन्यपाने हि कण्ठभूपानिरोधो बालानां स्व(। 13)-भावः ॥ 36.

ताम्रपर्णीव तद्धात्री स्तनयोस्संनिधिं व्यधात् .
मौक्तिकानीव निर्यान्ति वदनाद्व(। 14)दतोस्य यत् ॥

तद्धात्री स्तनविषये ताम्रपर्णीव संनिधानमकरोत् यतो वदतोस्य मुखा(। 15)न्मुक्ताफलानीव निर्गच्छन्ति . अव्यभिचारगतार्थत्वादनुपात्ते वचनरूपे विषये मुक्तानां((। 16) विषयित्वम् . वदतस्सेति(?) पाठ आर्पः ॥ 37.

अव्यक्तवर्णया तस्य भाविन्या शुद्धवर्णया .
स(। 17)रस्वत्या च लक्ष्म्या च मुखपद्ममचुम्ब्यत ॥

वर्णशब्दोच्चाराणा यशसश्च वाचक . बा(। 18)ल्येनाव्यक्तवर्णया पुरत-

---

1 Ms 'शोभत' le under 1 8 2 Correct नीतवान् 3 Ms 'गृही'
4 cf 33 above 5 Ms 'रने'

श्शुद्धवर्णया भविष्यन्त्या सरस्वत्या लक्ष्म्या च तस्य मुखपद्मं चुम्बितम् (1.19). सरस्वत्या मातृत्वाल्लक्ष्म्याः प्रियात्वाच्चुम्बनमुचितम् ॥ 38.

अव्यक्ता न तथा भाति न व्यक्तापि त(1.20)[था] यथा .
व्यक्ताव्यक्तेन रूपेण रुरुचेस्य सरस्वती ॥

अतिबाल्येनाव्यक्ता बाल्यातिक्रमे च(1.21) व्यक्तास्य वाङ् तथा भाति यथा किञ्चिद्व्यक्तेन रूपेण वाक्शुशुभे . रुरुचेति पाठ आ[र्षः](1.22) . सरस्वती नदी चेत्यर्थान्तरध्वनिः . तत्पक्षे अव्यक्तं मुक्तयेकपदं परव्याप्तिकं च व्यक्तं(1.23**57) भोगैकपदमपरव्याप्तिकं चेत्यागमिकार्थे·········(1.1) 39.

[सर्वलो]केक्षणप्रिया .
रवेरिवाविशिष्टार्थकरपादा गतिक्रिया ॥

ईक्षणं दर्शनं नेत्रं च तत्र सर्व(1.2)लोकानां प्रिया तथार्थः प्रयोजनं पदार्थश्च सोविशिष्टो यस्य तत्करपादं यस्यां सास्य ग(1.3)तिः रिङ्खणं शुशुभे ॥ 40.

जितराजीवलावण्ये मनोज्ञस्खलनाकुला .
मुखे व्यक्तिं ययौ तस्य(1.4) वाणी पादद्वये गतिः ॥

पद्मसुन्दरे मुखपादद्वये चास्य गतिर्व्यक्तिं गता स्खलनं वर्णव्य(1.5)त्यासः पतनं च तेनाकुला यतस्ततो मनोज्ञा च ॥ 41.

शुकेष्वध्याप्यमानेषु धात्रीभिस्तेन भू[रि](1.6)शः .
पर्वते पर्वते राम इत्याकर्ण्योन्मनायितम् ॥

पर्वते पर्वते राम इति वचनं धात्री(1.7)भिश्शुकेषु पाठितेषु तच्छ्रुत्वा तेनोत्कण्ठितचित्तेन संपन्नम् . पूर्वजन्मस्मरणादिति भावः ॥ 42.

---

1 Ms. °पद्म lc. under line 19. 2 Which, then, is the आर्षं reading ? 3 Ms. पृ. रा. on margin 4 Is it °र्थस्याप्रस्तुतस्य ध्वननम् ? 5 Ms. रक्त°. 6 Ms सोविधि°. 7 Ms. °द्ये lc. under l. 5. 8 Ms. °निव्य°.

दशावताराभरणं कण्ठे रक्षार्थमाहितम् .
अनन्यरक्षमात्मानमशंसत्तस्य रक्षितुः ॥(1.9)

अस्य बालस्य रक्षार्थं कण्ठे स्थापितं दशावतारसंज्ञमाभरणं कर्तृ तस्य रक्षितुरात्मा(1.10)नं नान्यस्माद्रक्षा यस्य तमशंसत् . हरेरेव दशावतारत्वात् अस्य च नारायणावता(1.11)रत्वात् ॥ 43.

त्रैलोक्यरक्षकस्यास्य किमर्थोस्मीति कान्तिमान् .
स्वेनैव स्वं जहासेव कण्ठे व्या(1.12)घ्रनखाङ्कुरः ॥

त्रिभुवनरक्षितुरस्यास्मि निष्प्रयोजन इत्यतो व्याघ्रनखो दीप्तिसारा-(1.13)त्मनैवात्मानमहसदिव ॥ 44.

चूडाकरणसंस्कारसुन्दरं तन्मुखं बभौ .
पाश्चात्यभागसंभ्रा(1.14)न्तलक्ष्मेव शशिमण्डलम् ॥

पश्चाद्भागे सकलङ्कमिवेन्दुबिम्बं तन्मुखं चूडाकर्म(1.15)शोभनं बभौ ॥45.

अत्रान्तरे पुनर्देवीवपुः प्रैक्षत पार्थिवः .
स्वप्नदृष्टभुजङ्गेन्द्रभोगका(1.16)न्त्येव पाण्डुरम् ॥

राजा देवीगात्रं स्वप्ने दृष्टस्याहिराजस्य भोगकान्त्येव पाण्डु पुनरपश्यत्(1.17) ॥ 46.

प्रसूतपृथिवीराजा देवी गर्भवती पुनः .
उदेष्यत्कुमुदा फुल्लपद्मेव सरसी बभौ ॥(1.18)

जनितपृथ्वीराजनामपुत्रा पुनर्गर्भिणी देवी बभौ उद्भेत्स्यमानकैरवा फुल्लपद्मेव(1.19) सरसी ॥ 47.

अन्तर्वत्नी विशेषेण देवी पुत्रेण पिप्रिये .
ज्येष्ठानुष्ठितसंस्कारं गर्भस्थेने[व पा](1.20)ठिता ॥

---

1 Ms. "थे माहितरया", "माहित" corrected to कण्ठे. 2 See VII. 22.
3 Ms. "भ्रै". 4 Ms. "न्त्व".

सगर्भा महिषी तेन पुत्रेणाधिकमतुष्यत् गर्भस्थितेन पुत्रेण ज्ये[ष्ठ-······शि](I 21)श्रिवेव ॥ 48.

माघस्याथ तृतीयस्यां सितायामपरं सुतम् .
प्रसादमिव [पार्वत्या मूर्तं प](I 22)रमवाप सा ॥

मूर्त्तं गौर्याः प्रसादमिव सा द्वितीयं पुत्रं गौरीतृतीयस्यामवाप-[त्] ॥ 49.

—(I 23*)——⏑————————⏑——— .
———पदानां यत्कृतार्थत्वाय पस्पृशे ॥

यु(I 1)द्धेष्वस्य हस्तिदलनलीलां भविष्यन्तीं जानतेव हरिराजनाम्नायं स्वस्य कृतार्थत्वाये(I 2)व स्पृष्टः. हरिराजो हि हस्तिमर्दनः ॥ 50.

उष्णशीतलयोर्मध्ये पावनं ज्येष्ठमाघयोः .
सोमे(I 3)श्वरभुवोर्जन्म वह्निगङ्गाम्भसोरिव ॥

सोम उमासहित ईश्वरः सोमेश्वरो राजा च तद्भुवोर्ग(1.4)एराकुमार-यो राजपुत्रयोश्चोष्णशीतयोर्ज्येष्ठमाघयोर्मध्येग्निगङ्गाजलयोरिव जन्म पाव-नमभूत् ॥(1.5) 51.

निदाघमाघजन्मभ्यां पीत्वा(?) तीव्रत्वमाययौ .
ताभ्यामातपशीताभ्यामिव प्रत्यर्थिकर्णयोः ॥(1.6)

निदाघे माघे च जन्म ययोस्ताभ्यां राजपुत्राभ्यामातपशीताभ्यामिव वैरिकर्णयोः पीत्वा(1.7) तीव्रत्वं प्रापत् ॥ 52.

अथ भ्रातुरपत्याभ्यां सनाथां जानता भुवम् .
जग्मे विग्रहराजेन कृतार्थेन शि(I.8)वान्तिकम् ॥

---

1 Sic. 2 Ms. गो°. 3 Ms. °जाए°. 4 Ms. °वाभू°. जन्म पावन° Ic on margin. 5 Sic. Is it पीडा ?

ताभ्यां भ्रातृपुत्राभ्यां रक्ष्यमाणां भूमिं जानता विग्रहराजेन कृतकृत्येन सता शि(।9)वसमीपं प्राप्तम् ॥ 53.

सुतोप्यपरगाङ्गेयो निन्येस्य रविसूनुना ।
उन्नतिं रविवंशस्य पृथ्वीराजे(।10)न पश्यता ॥

वीरत्वब्रह्मचारित्वाभ्यां द्वितीयो भीष्मो विग्रहराजस्य पुत्रो यमेन नीतः पृथ्वी(।11)राजेन हेतुनार्कवंशस्यौन्नत्यमिव पश्यता ॥ 54.

कैलासं जग्मुषो यातं पश्चाद्विग्रहभूभुजः ।(।12)
कविबान्धव इत्येकं भूमावशरणं पदम् ॥

मृतस्य विग्रहराजस्य पश्चात्कविबान्धव इत्येवं(।13) पदमशरणं यातं सम्पन्नम् ॥ 55.

प्रत्यानेतुमिवाकाण्डे पूर्णोपि सकलैर्गुणैः ।
पितृवैरि(।14)तनूजोपि प्रतस्थे पृथिवीभटः ॥

विग्रहराजं प्रत्यानेतुमिव गुणवान्पृथ्वीभटोपि प्रस्थितः ॥(।15) 56.

मुक्त्वेति सुधवावंशं गलत्पुरुषमौक्तिकं ।
देवं सोमेश्वरं द्रष्टुं राजश्रीरुदकण्ठत ॥

गलन्ति(।16) पुरुषा एव मौक्तिकानि यत्र तं सुधवावंशं त्यक्त्वा राजलक्ष्मीस्सोमेश्वरं द्रष्टुमुत्कण्ठिताभूत् ॥ 57.

आत्म(।17)जाभ्यामिव यशःप्रतापाभ्यामिवान्वितः ।
सपादलक्षमानिन्ये महामात्यैर्महीपतिः ॥

यशःप्र(।18)तापाभ्यामिव पुत्राभ्यां सहितो राजा महासचिवैस्सपादलक्षनामानं देशमानीतः ॥ 58.

---

1 Ms. °स्सो°. 2 Ms. °त्यक 3 Ms °व. 4 Ms. सहा°.

कर्पूर(1 19)देव्यथादाय दानभोगाविवात्मजौ .
विवेशाजयराजस्य संपन्मूर्तिमती पुरीम् ॥

मूर्त्ता श्रीरिव(1 20) [कर्पू]रदेवी दानभोगाविव पुत्रौ गृहीत्वाजयराजस्य नगरं प्रविष्टा ॥ 59.

तस्यां प्रविष्टमात्रायां(1 21) [गङ्गायामि]व सागरः .
देशस्संपूर्णभावं च पावनत्वं च लब्धवान् ॥

यथा गङ्गायां समुद्रस्त(1 22)[था तस्यां] प्रविष्टायामेव देशस्संपूर्णतां पावकतां च प्रापत् ॥ 60.

त्यक्त्वा पितुर्गिरा राज्यं यत्र रामो(1 23) [वनं ययौ] .
कुलं कलङ्कयांचक्रे तदाद्यैः सुधवासुतः ॥

यस्मिन्कुले रामः पितुराज्ञया रा(1 24**38)ज्यं त्यक्त्वा वनं गतः तत्कुलमाद्यस्सुधवासुतोदूषय[त्] ॥ 61.

[सुतः] काञ्चनदेव्यास्तं कलङ्कं यदशोधयत् .(1.1)
तद्रामावतरस्यैव पृथ्वीराजस्य चेष्टितम् ॥

काञ्चनदेव्याः पुत्रस्तं पितृहत्यारूपं कलङ्कं यद(1 2)क्षालयत्तच्छ्रीरामावतारस्य पृथ्वीराजस्य कृत्यम् ॥ 62.

तथा चास्य पितृभ्रात्रोस्सिद्धं प्रासादमा(1 3)क्रमम् .
अयं तु पितृनामाङ्कं नगरं निरमापयत् ॥ 63.

भग्नानां गिरिदुर्गाणां सह्यामतिनिर्भी(1 4)निव .
प्रासादान्निर्विधानत्र पुरो यानग्रजो व्यधात् ॥ 64.

गृधनाथमिर्त्तेपां मध्ये भवगटागद्रम् .(1 5)
प्रासादं वैद्यनाथस्य प्रजांक्षेमङ्करो व्यधात् ॥

1 Ms. 'पत्र'. 2 Ms. 'दास्यद्'. 3 No Comm 4 Ms पूर्व'.

ध्वंसितानां शैलकोट्टाना गणनाप्रतिनिधी(। 6)निव यान्प्रासादांस्तत्र नगरेप्रजोकरोत्तेषा मध्ये यूथनाथमिव ससाररोगभेपज वैद्यना(। 7)थस्य प्रासादं प्रजाहितोकरोत् ॥ 65.

> दत्ते हरिहयेनेव शुद्धरीतिमये हरौ ।
> प्रतिष्ठां ल(। 8)म्भितस्तत्र शुद्धरीतिमयः पिता ॥

रीतिर्धातुविशेष' . तत्प्रकृतौ हये सूर्येणेव दत्ते शुद्धरीति.(। 9) शुद्धाचारश्च पिता तेन प्रतिष्ठापित. ॥ 66.

पितुः रीतिमयस्य रीतिवाहारूढस्य प्रतिष्ठापि(। 10)तस्याग्रे रीतिमयं स्वात्मान प्रतिष्ठाप्य राजा स सर्ग त्रिधा रीतिमय कविरिवाकरोत् . कवि(। 11)पक्षे गौडीवैदर्भीपाञ्चाली चेति तिस्रो रीतय ॥ 67.

> एकस्थाने प्रतिष्ठाप्य ब्रह्मविष्णुम(। 12)हेश्वरान् ।
> त्रिपूरुषमिव श्राद्धं धन्यो निर्मितवान्पितुः ॥

एकस्मिन्स्थाने ब्रह्मादींस्त्रीन्देवा(। 13)न्प्रतिष्ठाप्य पितुस्त्रिपुरुषं श्राद्धमिव सोकरोत् . प्रतिष्ठाप्येत्यविवक्षितपूर्वकालम् ॥(। 14) 68.

> कृते यथेष्टफलदे तेनायतनपञ्चके .
> सुरद्रुममदो जिग्ये मेरोरजयमेरुणा ॥

तेन रा(। 15)ज्ञा प्रासादपञ्चके कृते सत्यजयमेरुदुर्गेण मेरोर्मदो जित. अभिलषितफलदायि(। 16)त्वात् ॥ 69.

> तन्निर्मितसुरागारैर्ग्रामैर्गङ्गानकादिभिः .
> अल्पावशेषचास्तव्या मन्ये जज्ञेमरा(। 17)वती ॥

---

1 Ms दन्ते   2 No verse corresponding to this comm The 1st, 3rd and 4th lines can be restored—पितु रीतिमयस्याग्रे   राजा सर्गं त्रिधा रीतिमय कविरिवाकरोत ॥   3 Ms. °समो   4 Ms राज .   5 Ms राज्ञेम°

तेन निर्मितानि सुरागाराणि येषु तैर्गङ्गानकादिभिर्मार्गैर्हेतुभिरमरावती अल्पेवशेषा(l.14) वास्तव्या देवा यस्यामिति जाने. अमरावतीतोप्यत्राधिकगुणत्वादिति भावः ॥ 70.

ऋणशुद्धिं(l.19) विनिर्माय निर्मांणैरीदृशैः पितुः.
तत्परे दर्शनं कर्तुं परलोकजयी नृपः ॥

देव[ालयनि](l.20)र्माणैः पितुः ऋणं शोधयित्वा पितुर्दर्शनं कर्तुं परलोकं जितवान्त्राजात्वरत् ॥ 71.

ए[काकिना हि](l.21) मत्पित्रा स्थीयते त्रिदिवे कथम्.
बालश्च पृथिवीराजो मया कथमुपेक्ष्यते ॥ 72.

[इतीवास्या(l.22*)भिषिक्तस्य रक्षार्थं व्रतचारिणीम्.
स्थापयित्वा निजां देवीं पितृ(?)]भक्त्या दिवं ययौ ॥

मत्पित्रा केवलेन स्व(l.1)र्गे कथं स्थीयते कथं च बालः पुत्रो मया [उपेक्ष्य]ते इत्यत इवाभिषिक्तस्य पुत्रस्य रक्षार्थमिव म(l.2)तानुष्ठायिनीं देवीं स्थापयित्वा पितृभक्तस्स स्वर्गमगात् ॥ 73.

तं पृथ्वीभटपर्यन्ताश्चाहमानपुर(l.3)स्सराः.
आदित्यद्युतयस्सर्वे प्रत्युज्जग्मुर्महीभुजः ॥

सर्वेपि स्ववंश्यास्स्वर्गे तं प्रत्युद्गताः ॥(l.4) 74.

तेषामेकतमं मध्ये नापश्यत्पितृवैरिणम्.
क्वचिदप्यन्धतामिस्रे मग्नं व्रीडावशादिव ॥

तेषां म(l.5)ध्ये एकं पितृवैरिणमेव स नापश्यत्. क्वाप्यन्धतामिस्रे लज्जयेव मग्नम् ॥ 75.

---

1 Ms. 'देंगूभि' l.c. under l. 18.

पुरः मदक्षिणं चक्रे(1.6) तस्य मत्युद्गतो नृपा .
सर्वाङ्गसङ्गिनीर्दृष्टीर्नेष्यन्निव कृतार्थताम् ॥

सर्वाङ्गेषु सङ्गिनीर्दृष्टीः(1.7) कृतार्थतामिव नेतुमस्य प्रदक्षिणमिन्द्रोकरोत् . प्रदक्षिणेन हि पश्चात्तथा अपीन्द्रदृष्टयः(1.8) पश्यन्ति ॥ 76.

यावज्जङ्गमकैलासमारोहति सुरद्विपम् .
तावत्कैलासमेवैष निन्ये शङ्कर(1.9)किङ्करैः ॥

जङ्गमं कैलासमैरावणं स यावदारुरुक्षति तावद्गणैः कैलासमेव नीतः ॥ 77.

उभौ(?) (1.10)विशत एवास्य रुद्राद्रिमुदपद्यत .
स्वपुत्रभूपदायादकन्दर्पजयि लोचनम् ॥

पृथ्वीराज(1.11)प्रतिमल्लकामजेतृ नेत्रं कैलासं प्रविशतोस्योत्पन्नम् . ईश्वरसारूप्यं प्राप्तवानित्यर्थः ॥ 78.

अ(1.12)कस्मात्पूर्वपुरुषौ पत्न्यास्तस्य च तेजसी .
चुचुम्बतुस्तं सस्नेहं वामदक्षिणयोर्दृशोः ॥

तस्य(1.13) तत्पत्न्याश्च पूर्वपुरुषौ तेजसी चन्द्रार्कौ तं नेत्रयोस्स्नेहेन चुचुम्बतुः ॥ 79.

अस्मिन्क्रुद्धे न मे भाव्यम(1.14)स्मिश्चन्द्रकलाच्छलात् .
स्वचापपुष्पदाम्नेव तं मनोभूरपूजयत् ॥

सोमेश्वरे क्रुद्धे सति म(1.15)म न जीवितव्यमित्यतश्चन्द्रकलाव्याजान्निजधनुःपुष्पगुणेनेव कामस्तमपूजयत् . अयं(1.16) भावः . पूर्वमीश्वरो मह्यमक्रुध्यद्यदा तदोमया रहितो हरोभूदत उमाप्रसादात्पुनरहं(1.17) प्राणान्प्राप्तवान् अयं तु सोमेश्वरो यदि मह्यं क्रुद्ध्यति तदा मम प्राणा न भवितारः ॥ 80.

---

1 Sic. Is it ततो. ? 2 Ms 'पश्यत. 3 Ms. 'म् स्वर'. 4 Ms. तंत्रे'.

जिता(1.18) कर्पूरदेव्यास्मि कस्माद्दयितया तव ।
केशग्रहमितीवास्य चकार त्रिदशापगा ॥

शुचि(1.19)त्वात्त्वत्प्रिययाहं कस्माज्जितेतीवास्य गङ्गा केशग्रहणमकरोत् ॥ 81.

भूमेर्भरस्त्वदीयेन सू(1.20)[ही]तस्तनयेन मे ।
इत्यालिलिङ्ग चाकाण्डे तं स्वकीर्तिसितः फणी ॥

त्वत्पुत्रेण मम भूभारो(1.21)·········तीव निजकीर्तिशेषस्तमालिङ्गत् ॥ 82.

जाता स्वरूपहानिर्नः पाताले तव कीर्ति(1.22)[भिः] ।
[चूडामणी]न्न सहते कुटिलानां सुतश्च ते ॥ 83.

इतीव कर्णयोर्बाहुद्वये शिरसि पादयोः .(1.23)
———[समा]श्लिष्टो यथाशक्ति स पन्नगैः ॥

सितस्यास्मत्स्वरूपस्य तव यशोभिर्हानिर्जाता(1.24··59) तव पुत्रः कुटिलानां चूडामणीनपि कुटिलाश्च सहते यद्वा वक्राणां चूडामणीश्च सहते च(1.1)स्यैव चक्रवर्तित्वेन चूडामणिधारणौचित्यात् इतीव कर्णादौ सर्पैस्स परिरब्धः ॥ 84.

अलङ्क(1.2)रणभोगीन्द्रफणमाणिक्यमालया ।
दीपवृक्ष इवाभूत्स शम्भोः प्रथमदर्शने ॥

भूषणा(1.3)हिफणरत्नश्रेण्या स हरप्रथमदर्शने दीपवृक्ष इवाभूत् ॥ 85.

मा गाः पुत्रं प्रति स्नेहं त्वं न त(1.4)स्योपयुज्यसे ।
इतीव रूक्षतां निन्ये कुतोऽप्येतस्य भस्मना ॥

1 Ms. तं. 2 Read 'लिलेश्मशे'. 3 Ms. 'ने. 4 Ms. पन'. 5 Ms. has ह on margin.

पुत्रे स्नेहं त्वं मा गमः यतस्त्वं तस्य नो(l.5)पयुज्यसे तस्य त्वत्तोप्यधिकगुणत्वात् इतीव भस्मना स रूक्षतां नीतः ॥ 86.

सुतस्य निर्मली(l 6)कर्तुं राज्यस्थितिमिवाहृतम् ।
कलिकालं दधौ कण्ठे रुद्धावतरणं हृदि ॥

स राजा अहि(l.7)तं विषं हृदये रुद्धप्रवेशं कलिकालमिव कण्ठेवहत् पुत्रस्य राज्यं निर्दोषीकर्तुमिव(l.8). आहृतमिति पाठो नार्षः अहितमिति पाठस्साधुः ॥ 87.

ये श्रूयन्ते त्रयस्तापास्ते शूलारोपि(l.9)ता इव ।
प्रजाक्षेमाय तत्पाणौ शिखात्रयमिषाद्बभुः ॥

आप्लवदयस्तापा ये श्रूयन्ते ते(l.10) वह्नस्ते शिखात्रयव्याजात्प्रजासुखार्थं शूले आरोपिता इव बभुः ॥ 88.

अपश्यद्वृषमारूढमात्मा(l.11)नं चन्द्रपाण्डुरम् ।
यशसेव निजेनैव नीयमानं शिवालयम् ॥

शशिशुभ्रं वृषमारोहन्तमा(l.12)त्मानं सोपश्यत् स्वयशसेवेश्वरनिकटं नीयमानम् ॥ 89.

बलात्पुरुषकारेण जेतव्यस्यात्मजन्मना ।(l.13)
मुण्डमालोकयामास करामलकवद्विधेः ॥

बलाद्धेतोः पुरुषेण करणभूतेन पृथ्वीराजेन जेतव्यस्य(l.14) विधेर्मुण्डं करामलकमिव सोपश्यत् ॥ 90.

ज्योतीरूपेषु पुत्रस्य संक्रान्तेष्विव तेजसि ।
शुद्धा(l.15)भिर्लोकपालानामस्थिस्रग्भिरभूष्यत ॥

---

1 Comm. °हितम्. 2 Ms. °षाद्बभुः (!). 3 Read पोर्द°. 4 Ms. पृथ्वीराजेन Ic. on margin. 5 Ms. °भेर्मु°.

पुत्रसम्बन्धिनि तेजसि विषये लोकपालानां प्र(l 16)शस्तेषु तेजस्सु सङ्क्रान्तेषु सत्सु शुद्धाभिस्सतीभिर्लोकपालानामस्थिमालाभिस्स भूषि-(l 17)तः. अशुद्धमपि वस्त्रं वह्नौ पतितं शुद्धं भवति ॥ 91.

पुष्करं कलिरूपेण कलिं हन्तुमिवा(l 18)गमत्.
विदार्य कृत्त्या तस्यैव क्रीडया पिदधे वपुः ॥

पुष्करं तीर्थं पद्म च हस्तिरूपेण ह(l 19)न्तुमागतमिव कलिं पाटयित्वा तच्चर्मणा लीलया गात्रं व्यधात् ॥ 92.

इति लज्जाकरं जन्म(l 20) मर्त्यात्सूनोर्हरन्निव.
परमेश्वरसायुज्यं देवस्सोमेश्वरो ययौ ॥

अमर्त्यपतेरपि पुत्रस्य मर्त्या[ज्ज](l 21)न्म लज्जाकरं सन्निवारयन्निव सोमेश्वरः परमेश्वरसायुज्यं गतः ॥ 93.

वैद्यनाथप्रतिष्ठायाः(l 22) प्रभावात्स शिवालये.
मरुच्छ्वेतयोस्तुल्यप्रतिपत्तिरजायत ॥

देवप्रतिष्ठायाः प्रभावा(l 23*)[च्छंक]रावासे मरुत्तश्वेतसमानादरस्संपन्नः ॥ 94.

पुष्करस्नातकायातनारदादिमुखादसौ.(l.1)
पुत्रराज्यस्थितीश्शृण्वन्रुद्रलोके सं पिप्रिये ॥

पुष्करे स्नात्वागतानां नारदादीनां मुखात्पुत्रसा(l 2)म्राज्य श्रुत्वा स रुद्रलोके च प्रीतोभवत् ॥ 95.

प्रसादपात्रमाकर्ण्य श्वेतन्यायेन तत्र तम्.
मृत्युर्विश(l 3)ति नाकाले तत्पुत्राधिष्ठिताः प्रजाः ॥

1 Comm °न गात्र (?) 2 Ms पत्रांवि° 3 Ms मत्यम्यू°. 4 Ms °मनंन्ति°. 5 Ms °रमातु°. 6 Ms °फ्त्य°. 7 Ms lc. under l 1

श्वेतसमं तं प्रसादपात्रं श्रुत्वा तत्पुत्रपालितं देशं यमो(l.4) नाद्याप्य-
काले विशति . अद्यापीत्युभयोश्श्लोकयोर्योज्यम् ॥ 96.

पादाधिष्ठितपृष्ठं तं वृषमारोहतीश्व(l.5)रे .
पश्यन्त्यद्यापि सासूयं नन्दिप्रभृतयो गणाः ॥

पादेन तत्पृष्ठमधिष्ठायेश्वरे वृषमारोहति(l.6) सति नन्दिरुद्रादयो गणा-
स्सोमेश्वरं सासूयमद्यापि पश्यन्ति. परस्योत्कर्षासहनमसूया . तदु(l.7)त्कर्षं
न सहन्ते इत्यर्थः ॥ 97.

स्वयं निर्मितपूर्वस्य सरसः परिवृद्धये .
गृहीतामिव वास्तव्यसौम(l.8)नस्यमहोदधेः ॥ 98.

पितुर्मन्दाकिनीं मूर्ध्नि भगवद्भावलाञ्छनम् .
स वारुणस्य वाणस्य प्रतिष्ठा(l.9)फलमैक्षत ॥

ईश्वरसायुज्यज्ञापिकां गङ्गां वरुणवाणप्रतिष्ठायाः फलं स दृष्टवान्(l.10)
स्वेन निर्मितस्य सरसो वृद्ध्यर्थं पौरसौमनस्यसमुद्राद्गृहीतामिव ॥ 99.

स सर्वपूर्वपुरुषान्पश्यन्नु(l.11)द्रत्वमागतान् .
आत्मैव पुत्र इत्यर्थं श्रौतं सत्यममन्यत ॥

ईश्वरभावं प्राप्तान्सर्वान्पूर्वपुरुषा(l.12)न्पश्यन्स राजा पुत्र आत्मेति
वैदिकं वचनं सत्यं मतवान् . स्वस्यापि रुद्रत्वप्राप्तेरिति भावः ॥ 100.

किं(l.13) भूयसा गिरिशवत्स सर्वगततामगात् .
पृथ्वीराजकीर्तीनामियत्तामिव वीक्षितुम् ॥(l.14)

बहुनोक्तेन किम् . ईश्वरतुल्यं स राजा सर्वगतोभूत् पुत्रयशसामियत्ता-
मिव द्रष्टुम् . पृ(l.15)थ्वीराजयशांसि सर्वव्यापीन्यभूवन्निति तात्पर्यम् ॥ 101.

---

1 i e 96, 97. 2 Ms. °स्वा°. 3 Ms. °मन्दा°. 4 Ms. °सानु°. 5 Ms °वंपु° lc. under l. 10. 6 Ms. °न्पश्य°. 7 cf. आत्मा वै पुत्रनामासि. Shatapatha Br, 14, 9, 4, 26

यो मां मागुदमूलयद्दशमुखं(1.16)स्तस्यापि यो निर्ममे
मूलोन्मूलनमात्मजत्वमगमत्सोप्यस्य पुण्यात्मनः .
कुर्वाणो मम वर्तते(1.17) स च दिवारात्रौ यशोराशिभि-
र्वृद्धिं विन्ध्यवदित्यमन्यत शिवं तेन त्रिनेत्राचलः ॥

यो राव(1.18)णो मामुद्दलनत्तस्यापि मूलानामुत्खननं योकरोत्सोस्य पुत्रत्वमागतः स च पृथ्वीराजो(1.19) यशोभिर्विन्ध्यस्येव मे वृद्धिं करोतीति तेन सोमेश्वरेण कैलासस्साध्वमन्यतेति भद्रम् ॥(1.20)                102.

श्रीश्रीकण्ठचरित्रकाव्यविधृतौ विश्वस्य निरयस्य च
च्छायाभाजि किरातकाव्यवि(1.21)वृतौ विश्वस्य रम्यश्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ संपेशभाजोष्टम-
स्सर्गोगादि(1.22)[ति] जोनराजकवितुः खिन्नस्य शास्त्राध्वनि ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
रा(1.23••60)जात्मजो विवरणेन स जोनराजः .
सर्गं व्यधात्सु ⏑ ⏑ – ⏑ ⏑ –ष्ट पृथ्वी-
राजाख्यराजविज[याभिधका](1.1)व्यराजे ॥

पृथ्वीराजविजयविवरणेष्टमस्सर्गः ॥

1 Ms. [illegible]    2 Ms. [illegible]    3 Ms. has [illegible] on margin

## [ नवमः सर्गः ]

इति हृद्गतेन द[यितेन रु](1.2)द्रता-<br>
मुपजग्मुषा मुषितमोहदोहदा ।<br>
अपवर्गपद्धतिमिवानुपप्लवां<br>
तनयश्रियं नृपवधूर(1.3)शिश्रियत् ॥

एवं रुद्रभावं गतेन हृद्गतेन भर्त्रैव निवारितमोहोत्पत्तिः कर्पूरदेवी निर्बाधां मोक्ष(1.4)वीथीमिव पुत्रलक्ष्मीमधारयत् ॥ 1.

तनयोऽभ्यषिच्यत यदा तदापत-<br>
न्गगनादनभ्रमलिनादपां(1.5) कणाः ।<br>
असमञ्जसव्यवसितापसारण-<br>
प्रथितग्रहाम्बुजलशीकरश्रियः ॥

यदा राजपुत्रो(1.6)ऽभिषिक्तस्तदा निरभ्रादाकाशाज्जलकणाः पेतुः असमञ्जसमनुपपन्नं यद्व्यवसितं व्यवसायः(1.7) प्रजापीडनं तस्यापसारणं त्यागस्तेन प्रथिता निर्गता ये ग्रहाम्बुकणास्तत्समाः । उपमोपक्रमो(1.8)ऽत्रेयम् । व्यथितेति पाठो नार्थः वेद्यमाणविरोधात् । यद्वा व्यथितेति पाठः विपूर्वस्यायतेः(1.9) निष्ठायां रूपम् ॥ 2.

शशिसूर्ययोः ससुतयोर्हि मानसं<br>
कुलपक्षपातपतिमात्रमश्नुते ।<br>
परि(1.10)पालितां स्वयमवेक्ष्य मातरं<br>
न महीसुतः स्पृशति जातु वक्रताम् ॥

---

1 Ms. °वपू°. 2 Ms. °वेथी°. 3 Ms. °तुद्र°. 4 Ms. °सरण°. 5 Ms. °माउ°.
6 Ms. °पंव°. 7 Ms. स्वसु°. 8 Ms. यनिसुष्योः written above °र्हि under l. 9.

हि शब्दस्तथाह्यर्थे. चन्द्रा(1.11)र्कयोश्चित्तं सपुत्रयोः कुले पक्षपातं भजते तथा स्वमातरं भूमिं पालितां दृष्ट्वा भौमो वक्रत्वं न स्पृ(1.12)शति. असौम्यग्रहाणां वक्रत्वे प्रजापीडोत्पत्तिरिति भावः ॥                                                    3.

क्रतुभिस्स्वशिष्यकुलतृप्तिनि(1.13)र्वृतो
बृहतां पतिर्न भजतेतिचारिताम्.
दनुजद्विपि प्रभुपदव्यवस्थिते
प्रतिभैव का भृगु(1.14)भवस्य दुर्नये ॥

तद्राज्ये यज्ञैस्स्वशिष्याणां देवानां कुलस्य तृप्त्या सुखितो देवाचार्यो नाति(1.15)चारमेति. शुभग्रहाणामतिचारे प्रजापीडोत्पत्तेरिति भावः. दानवशत्रौ राज्ञि सति दानव(1.16)गुरोर्दुर्मार्गे स्फूर्तिरेव का ॥                                                    4.

अनयद्य एव वदनावशेषता-
मवनेस्स एव परिपालनोद्यतः.(1.17)
तदुपर्यतीव मृगयाकुतूहली
शममेतु मा तदिह सिंहिकासुतः ॥

य एव राहुं मु(1.18)खमात्रशेषत्वमनयत्स एव हरिर्भूमेः पालकः तदुपरि राजा मृगयाकरः तत्तस्मात्(1.19) सिंहिकासुतो राहुस्सिंहश्च मा शममेतु. काका एत्वेवेत्यर्थः ॥                                                    5.

उदरंभरिर्नरपतेर्यशो(1.20)हिमै-
र्न दिशां गणः स्पृशति दाहसाहसम्.
अत एव जातुचन न प्रतन्यते
कलिकालि(1.21)का क्वचन धूमकेतुना ॥

राज्ञो यशोहिमैः पूरितोदरो दिशां गणो दाह एव साहसं ना·······

---

1 Ms. स्पृ°.   2 Ms °वृर्त.   3 Ms. °.   4 Ms. °र्मार्ग्ये corrected to °र्मार्गे.
5 Ms गम्य.   6 Ms. गणं.

···(l.22)तथा धूमकेतुना प्रजापीडासूचकेन शिखातारकेण कलिकालिका दुर्भिक्षादि का·········(l 23*)············हिमे च सति दाहो न भवति[1] धूमकेतुरग्निः············करोति ॥ 6.

नवभिर्ग्रहैरिति विधेयतां गतै-
र्नव(l 1)खण्डयापि धरया सुखं स्थितम् .
ग्रहचक्रवर्त्तितनयोपि सोन्तकः
स्पृशति प्रजास्वसमये न कं(l.2)चन ॥

शुद्धैर्नवभिर्ग्रहैर्हेतुभिर्नवखण्डया भुवा सुखेन स्थितम् . स यमोपि प्रजासु मध्ये कं(l 3)चिन्नाकालेमारयत् यतो ग्रहचक्रवर्त्तिनः सूर्यस्य पुत्रः . पृथ्वीराजस्य सूर्यवंश्यत्वादिति भावः ॥(l 4) 7.

अतिवृष्टिभीरुदधिः पयोमुचा-
मुपयुक्तमेव सलिलं प्रयच्छति .
स्मरतीव रामतनुना वि(l 5)निर्मितां
क्षितिपेन पूर्वमनलास्त्रखण्डनाम् ॥

अतिवृष्टेर्भीतः इव समुद्रो मेघानामुपयु(l.6)ज्यमानमेव जलमदात् श्रीरामेण राज्ञा कृतामाग्नेयास्त्रखण्डनां स्मरतीवाब्धिः ॥ 8.

अभिन(l.7)न्दितोपगमनाः कृपीवलैः
शंवलीभवन्ति समये वलाहकाः .
चरणोदकं क्षितिपतेस्तर(l 8)ङ्गिणी
गगनस्थितेव परिपूरयत्यमून् ॥

कृपीकरैस्स्तुतागमना मेघा वर्षासु श्यामीभवन्ति(l 9) नारायणावतारस्य राज्ञः पादजलं नदी गङ्गाकाशस्था मेघानिवापूरयत् . गङ्गाजल(l.10)मेव

---

1 Ms दा° to °ति is on top margin 2 Ms. 'ग्रहै'. 3 Ms. 'दला'. 4 Ms. 'निन्दिता. 5 Ms. 'नन् 6 Ms. 'शेमव'. 7 Ms. 'वन्त्य'.

मेघा वधूपुर्न तत्र सामुद्रमित्यर्थ गाङ्गसामुद्रयोर्जलयोर्लक्षण गुणान्तर चायुवे(1 11)दशास्त्रेपूक्तम् ॥ 9

प्रतिमुच्य भूतलजुषो निधीनपि
क्वचिदप्यगम्यत पलाय्य पन्नगैः .(1 12)
प्रतिपद्य दुर्विवरचारचातुरीं
कथमुर्वरामभिभवेयुरुन्दुराः ॥

भूतलस्थान्निधीनपि(1 13) त्यक्त्वा सर्पे क्वापि गतम् राज्ञैव निधिपालनादिति भाव । पलाय्येति पूर्वकालश्चिन्त्य दुर्विवरेषु चारस्तत्र चातुरीमाश्रि(1 14)त्यारवो भूमि कथ स्तनेयु ॥ 10.

न स भूतलस्य लव एव विद्यते
नृपतेः प्रतापदहनश्रितो(1 15) न यम् .
अत एव कुत्रचिदपि प्रपद्यते
शलभावली न सुलभावकाशताम् ॥

राज्ञ प्र(1 16)तापाग्निर्यं देश नाश्रितस्स नास्त्यत एव शलभमाला सुलभाश्रयता न प्राप्ता शलभा(1 17) हि वह्निना दह्यन्ते ॥ 11.

वितताान रात्रिचरचक्रवर्तिनो
दशकन्धरस्य किल यः कुलक्षयम् .(1 18)
स यदा पुनाति पुनरेव मेदिनीं
शुकसारणाद्यभिभवस्तदा कुतः ॥

रक्ष पते रावणस्य(1 19) यो वशाक्षयमकरोत् स एव यदा भूमिमवतरति तदा शुकाना सारणादिना सचारादिना(1 20) भव कुत .
शुकसारणौ रावणमन्त्रिणौ च ॥ 12

---

1 Ms गह्रास 2 Ms पत्र॰ 3 Ms रा॰ to व le on margin.
4 Ms दव॰ 5 Ms श्राम 6 Ms ह्र 7 Ms सम्त Is it यो नाम रात्र॰?

नरनाथकीर्त्तिविभवस्य दूरतो
भवति स्म(1 21) दिव्यमपि राजमण्डलम् .
अतिमात्रमासदनतो महीभुजां
तदरुन्तुदः कथमुपप्लवो(1 22) विशाम् ॥

दिव्यमपि राजमण्डलं चन्द्रबिम्बं च राजयशसो दूरेभवत् यशसोऽसितत्वात्(1.23**61) तस्ततो दिव्यस्य राज्ञां स्वामिनां मण्डलस्य दूर-..............पतीनां कर्तृणां विशां कर्मभू[ताना](1.1)मुपप्लवः कुतः. अतिमात्रमासदनतो नैकट्यात् ॥ 13.

बहलैर्यथैव शबला बलाहकै-
र्गगनस्थली(1.2) भवति निर्गते तपे .
शरदागमं प्रति तथैव जायते
खलधान्यराशिभिरपह्नुता मही ॥

वर्षा(1.3)सु यथाभ्रैर्व्योमशबला भवति तथैव शरदि धान्यैः कणैर्भूश्छादिताजायत ॥ 14.

न तदस्ति किंचि(1 4)दपि यद्गवेष्यते
सुवसीभवज्जनपदासु सीमसु .
गृहमेधिनां तु हृदयान्यनिर्वृति-
र्न(1 5) जहाति भिक्षुमुखदर्शनं विना ॥

सुवसीभवन्तो जनपदा यासु तासु सीमसु सतीषु यद्गवे(1.6)ष्यतेन्वेष्यते तन्नास्ति. सर्ववस्तूनां सुलभत्वादिति भावः. तुर्व्यतिरेके. भिक्षूणां याचकानां मु(1.7)खदर्शनं विनाऽनिर्वृतिश्चित्तदौःस्थ्यं गृहस्थानां चित्तानि नात्यजत्. याचकदुर्भिक्षमेवाभू(1.8)दित्यर्थः ॥ 15.

---

1 Ms 'भुज 2 Ms 'श्रमा' l. under l. 2. 3 Is it खलु? 4 Ms. कौ'. 5 Ms 'ति' crossed after 'न्य'. 6 Ms. गह्नि.

अपराधमेव न करोति कश्चन .
क्रियते जनस्य कतमस्य निग्रहः .
कलिनाप्य(1.9)भिन्नचरणस्त्वनुग्रहं
नृपतेरवाप परिपूर्णपाद्वृषः ॥

राज्ञां प्रजासु निग्रहानुग्रहौ(1.10) युक्तावित्याह . कोपि नापराधमकरो-
द्तः कस्य निग्रहः क्रियते अपराधे सति दण्डस्य युक्त(1.11)त्वात् . तदेवा-
पराधाभावं व्यतिरेकद्वारेण दर्शयति . कलिनापि . अपिशब्दः किंपुनस्त्रे-
ता(1.12)द्वापराभ्याम् . अभिन्नाश्चरणा यस्य स वृषो धर्मोत एव चतुष्पान्त्रा-
ज्ञोनुग्रहं प्रापत् . परिपूर्ण(1.13)पादिति चिन्त्यम् ॥ 16.

अधिदैवते शिखिनि नित्यतर्पिते
न मधौ धुनोति कुसुमानि तत्सखः .(1.14)
अतितर्पणादकविमानिवाचर-
त्यचलेषु नोष्मसमये भयं शिखी ॥

अग्नये स्वाहा(1.15) वसन्ताय स्वाहेति श्रुतेरग्निर्वसन्तस्य देवता . व-
सन्तस्याधिदैवतेग्नौ नित्यतर्पिते सति(1.16) तत्सखो वायुर्मधौ वसन्तेषु पुष्पा-
णि नाधुनोत् . ग्रीष्मे शैलेष्वग्निर्दाहं नाकरोत् यज्ञेष्वति(1.17)तृप्त्या गवभु-
भुक्त इव ॥ 17.

अतिदातृतामतिकदर्यतां च न
प्रकटीकरोति जलदस्त(1.18)पात्यये .
विहितोपदेश इव मध्यमां स्थितिं
नृपशिक्षया जनपदैरुपागतः ॥

वर्षासु(1.19) मेघोतिदातृतामतिवृष्टिमतिकदर्यतां वृष्टिप्रतिबन्धं च ना-
करोत् अतस्संभाव्यते नृ(1.20)पान्छिक्षया मध्यमां स्थितिं जनपदैर्जनैः कृ-
तोपदेश इव . तदा हि राज्ञो नीत्या लोको यु[क्ता](1.21)वन्ययोभून्॥ 18.

1 Ms. कियु°. 2 Ms. °ध्व र्तनि°. °न° lc. under 1.12. 3 Pānini 5 4. 140. Also cf V. 133.

परिरक्षणाभिमुखशालिपालिका-
नयनश्रिया कृतपराभवा इव .
[तृ](1 22)णमेव कुत्रचन भूरि मन्वते
न पतन्ति शालिषु शरत्क्षणे मृगाः ॥

शालिरक्षिकाया······(1 23*)······या जिता इव मृगास्तृणमेव····
··········[तृ]णमात्रोशनदानेधिवयस(?)योग्या इत्यर्थः क्वापि(1 1)·······
······षु मृगा नापतन् . तृणमात्रेप्यनर्हाणां का शालिस्पृहेत्यर्थः ॥ 19.

मृगयाकुतूहलिनि बाल(1 2)पार्थिवे
विमुखैर्निरुद्धगतयो मृगैरिव .
अतिदारुणा न रजनीषु हैमनी-
ष्वपि वातुमुद्यमभृतस्स(1.3)मीरणाः ॥

बाले राज्ञि मृगयोद्यते पलायितैर्मृगैर्निरुद्धगमना इव वायवो हेमन्त-
रात्रिष्व(1.4)पि नावहन् . वायुर्हि मृगवाहनः ॥ 20.

परिरक्षके सुमनसां महीपतौ
शिशिरो रिपुस्सुमनसा(1 5)मपि क्षितिम .
पिदधाति कुन्दकुसुमैस्तथा यथा
बहुना ह्रियेव न हिमेन पत्यते ॥

सुमन(1.6)सां साधूनां रक्षके राज्ञि सुमनसां पुष्पाणां शत्रुरपि शिशिरः
कुन्दपुष्पैर्भूमिं तथाच्छादय(1 7)यथा लज्जयेव तुहिनेन न पतितम् ॥ 21.

वपुषा जितोप्यनुचरीकृतस्तथा
युवभिर्यथा परक(1 8)लत्रदर्शने -
परिहृत्य कार्मुकशरौ करद्वया-
त्पिदधाति दृष्टिमिव पुष्पसायकः ॥

---

1 Ms. 'मत्र'. 2 Ms. 'र्था न. 3 Ms. 'रणः 4 Ms. पात्य'. 5 Ms. 'रो.

तद्गुणैः(l.9) रूपेण जितः कामोपि तथा विधेयीकृतो यथा यूनां परस्त्रीदर्शने काम एव हस्तद्वयाद्ध(l 10)नुश्शरौ त्यक्त्वा यूनां दृष्टिं हस्ताभ्यामिव पिदधाति . तरुणाः परस्त्रीदर्शनं न कुर्वन्तीत्यर्थः ॥(l.11) 22.

सुरसद्मभिः प्रतिपदं नवैर्नवै-
स्त्रिदिवादिवाविरतमागतैर्महीम् .
निजमेव कर्म विमलं(l 12) न मानवा-
नमरावतीमनयदुद्धसामिव ॥

शुद्धं निजमेव कर्म कर्तृ मानवानमरावतीं ना(l 13)नयत् . स्वर्गादप्यतिगुणे कृते तत्रैव स्वर्गमभुञ्जतेत्यर्थः . अतस्संभाव्यते उद्वसामि(l.14)व . अत्र हेतुमाह . प्रतिस्थानं नवैर्नवैर्निर्मितैर्देवगृहैः स्वर्गादिव भूमिमागतैः ॥ 23.

प्रथि(l 15)मानमेति रजनी यदा तदा
यदुदेति कुम्भतनयो महामुनिः .
प्रतिचत्वरानवरतोद्भवन्मठ-
द्विज(l 16)वेदशब्दरुचिरत्र कारणम् ॥

यदा रात्रिर्वृद्धिमेति तदागस्त्यो यदुदेत्यत्रोदये प्रतिचत्व(l.17)रपथेष्वविच्छिन्नमुधरन्तो ये मठद्विजवेदशब्दास्तेषु रुचिरश्रवणेच्छा भवति हेतुः ॥ 24.

ग(l 18)णनातिगान्युपवनानि वापिका-
स्सरसीः प्रपाश्च दधती वसुन्धरा .
दिननायकस्य जगदे(l 19)कचक्षुषो-
प्यधुनाश्नुते दशमभागदृश्यताम् ॥

असंख्यान्युद्यानादीनि दधती भूस्सूर्येण(l.20) [द]शमभागे दृश्यतां

1 Ms 'थ' corrected to 'द'. 2 Ms. तत्र lc. under l 16. 3 Comm 'दोधरन्त'.

द्रष्टव्यस्त्वमेति भूमेर्नवभागेपूपवनादीनि सन्तीत्यनस्सूर्येण दशमे(121) भागे दृश्यते इत्यर्थ. ॥ 25.

पृथिवी तथा सरसतामुपागता
नृपतेर्यशोभिरमृतातिशायिभिः .(122)
समुदेति हस्तयुगमात्रकाद्यथा
प्रतिकूपकं [जित]रसायनं पयः ॥

अमृतादधिकै रा(123)[जय]शोभिस्सरसतां भूमिस्तथा प्राप्ता यथा प्रतिकूपं जितामृत जलं हस्तद्वयमात्राद्(124**62)त्पद्यते ॥ 26.

न विनास्ति मासमपरो मलिम्लुच-
⏑⏑–⏑–⏑⏑⏑⏑⏑–⏑–:
[वटवस्तृतीयस](11)वनस्वरैः पुनः
कलिमेव तस्करमवन्ति रात्रिषु ॥

...... ...सं विनान्यो मलिम्लुचो नास्ति या(12)मिकाः प्राहरिका रात्रिषु वृथैव निष्फलं जाग्रति. वटवो ब्राह्मणपुत्रास्तृतीयसवने वेदध्वनिभिस्तं क(13)लिमेवावन्ति रक्षन्ति. वेदध्वनिं श्रुत्वा कलिचौरः पलायित इत्यर्थः ॥ 27.

प्रपतन्ति कस्यचन(14) नास्त्रसंपदः
प्रथिते प्रतापदहनेपि भूपतेः.
विनिधाय वारिदगणेष्वतो भिया
शिशिरीक(15)रोति मघवा शरासनम् ॥

राज्ञः प्रतापाग्नौ प्रथिते सति कस्याप्यस्त्राणि न पतन्ति प्रभवन्ति(16) दीप्यन्ते च अतोस्त्रज्वलनाभावाद्भीतोमेघेषु विन्यस्येन्द्रस्स्वधनुश्शीतलीकरोतीत्युत्प्रेक्षा ॥ 28.

---

1 Ms दृष्ट॰. 2 Is it ॰चो रजनीषु जाग्रति वृथैव यामिका. ? 3 Ms. ॰रेषु॰. 4 Ms कमि॰ 5 Ms रात्रिषु Ic under 12 6 Ms ॰रोष॰.

न यथा त(1 7)था व्यवहरत्युपर्वुध-
श्शुभमेव चिन्तयति सर्वसत्वनाम्.
विजहत्सु शूरतनयेषु शस्त्रितां
स्वप(1.8)दे न लोहचरणोपि दृश्यते ॥

उपर्बुधोग्निस्स्वेच्छया न व्यवहरति सर्वगृहाणां शुभमेव ध्याय(1.9)ति तथा शूरा वीराः शूरोर्कश्च तत्पुत्रेषु शस्त्राणि त्यजत्सु सत्सु शूरतनयो लोहचरणः स्वस्थाने न दृ(1.10)श्यते ॥ 29.

यमकिङ्करेष्वपि निरुद्धसंचरे-
ष्वविशञ्च यातुपतिसैनिकाः क्षितिम्.
मरुमेदिनी(1.11)ष्वपि विहाय विक्रियां
मधुरत्वमेव वरुणेन सेव्यते ॥

यमकिङ्करेष्वपि रुद्धप्रवेशेषु सत्सु(1.12) यातुपतिसैनिका राक्षसा भुवनं न प्रविष्टाः. क्षारत्वं त्यक्त्वा वरुणेन मरुषु माधुर्यं सेवितम् ॥ 30.

परिर(1.13)क्षतीव कमलस्थितां श्रियं
सरसामुपान्तविपिनेषु मारुतः.
धनदस्य जाग्रति वसुंधराधवे
न(1.14) निधिप्रजागरमकुर्वतोरगाः ॥

सरसामन्तेषु वायुः पद्मलक्ष्मीमिव रक्षति तथा राज्ञि रक्षा(1.15)र्थं जाग्रति सर्पा निधिरक्षार्थं प्रजागरं नाकुर्वन् ॥ 31.

नृपतिस्स्वयं स्फुरति वैष्णवं मह-
स्तदुपर्यु(1 16)परिक्रियत रुद्रतेजसा.

1. Ms. 'न्दुग' 2 Ms. घक्रिर्या. 3 Ms. 'कः. 4 Ms. 'विद्यः. 5 Cfr. verse 10, supra .6 Ms. 'परिक्र'.

रविसंख्यया विवदमानमानम-
चदशेपमेनमधिराजमण्डलम् ॥(1.17)

राजा स्वयं वैष्णवं तेजो भवति तत्राप्येकादशानां रुद्राणां तेजसोपबृंहितः अतो द्वादशतेजो(1.18)मयस्सम्पन्नः ततो रविसंख्यया द्वादशसंख्यया अविवदमानं विवादरहितं द्वादशविधं रा(1.19)जमण्डलं समस्तमप्येनमानमत् ॥ 32.

इति मूर्त्तयोष्ट परमेश्वरं यथा
वरुणप्रभंजनहुताश(1.20)नादयः .
जगदीशमित्थममुमध्युपासते
विरचय्य तेजसि पदं वशंवदाः ॥

वरुणादयो(1.21)ष्टमूर्त्तयः परमेश्वरं यथा सेवन्ते तथा तस्य तेजसि स्थानं कृत्वा य·········स्ता अमुं राजानं सेवन्ते ॥(1.22) 33.

धृतसर्वरुद्रमहसः क्षमापते-
र्जननी निजारभत पत्तनं निजम् .
उपलभ्यते तदुपल⌣(1.23)नीतये
सममेव रुद्रनृपभैः कुतूहलम् ॥

रुद्रतेजोमयस्य राज्ञो माता यन्नगरं निर्मे······(1.24*)··············
सममेव लब्धम् ॥ 34.

इति रामराज्यसुख(1.1)[संप]दां पदं
समपादि यत्कलियुगेपि मेदिनी .
कुलकौमुदी कविक्षुरेरवाप त-
त्पतिदेवता(1.2)व्रतफलं विपक्रिमम् ॥

कलावपि रामराज्यसुखश्रियां स्थानं भूमिर्यत्संपन्ना तत्कर्पूरदेवी(1.3)पतिव्रतात्वफलं पक्वम् . तस्याः पातिव्रत्याचरणादेव भूस्सुखेनासीदित्यर्थः ॥ 35.

---

1 See I. 68, II. 13. 2 Ms. तया lc. under l. 22. 3 Ms. 'क्रिमन्.

गुरुशुक्रयोस्स(1.4)चिवयोरुपर्यधो
वलंविद्विपा च वलिना च वर्त्यते .
इति मध्यमं भुवनमाश्रितस्तयो-
रुभयोरपि(1.5) प्रतिभया भयाय यः ॥ 36.

स कदम्बवास इति वासवादिभिः
स्पृहणीयधीर्व्यसनमध्यपाति(1.6)भिः .
अवगाहते सहचरस्सुमन्त्रितां
परिरक्षितुं क्षितिधरस्य सद्गुणान् ॥

जीवे सचिवे सति(1.7) वलंविद्विपेन्द्रेण दिवि परिवर्त्यते . स्वार्थेणिच् . शुक्रे सचिवे सति वलिदानवेन पाताले वर्त्यते(1.8) इति बुद्ध्येव यः कदम्बवासनामा सचिवस्तयोर्भयार्थं मध्यमं स्वर्गपातालमध्यस्थं भुवनं भू(1.9)मिमाश्रितस्स सहचरो राज्ञष्षड्गुणानक्षितुं मन्त्रित्वं धारयति व्यसनपतितैरिन्द्रादिभिः(1.10) काङ्क्षणीयबुद्धिः ॥ 37.

हनुमन्तमेनमपि रुद्रमामन-
न्त्यपरानसौ दशसु दिक्षु रक्षितुम् .
नृ(1.11)पतेर्यशो नियुयुजे स्वयं पुन-
रसकलक्रियानुचरभावमश्नुते ॥

जना एनं कदम्बवासं ह(1.12)नुमन्तं रुद्रमामनन्ति तथा हि राज्ञो यशो रक्षितुं दशसु दिक्षु सैन्यान्विसृष्टवानसौ(1.13) कदम्बवासः स्वयं निखिलकार्येष्वनुचरत्वं भजते ॥ 38.

कपिलक्षणं कपि(1.14)लतां वहन्निति
प्रतिभाधनैः प्रतिपदं परीक्षितः .

1 Ms कड°. 2 Comm. सद्गुणान्. 3 Ms. धरित्रि°. 4 Ms. °न्त्वरि. 5 Ms. स्पु-(1.13)न्नन् crossed with vertical strokes after °ष्ठे. 6 Ms. पुनः crossed with vertical strokes after °ष्टः. स्व written under स्स. 7 Ms. °रुद्धं.

न यशोमयेन वपुषा वितीर्णवा-
न(l 15)वलम्बमेव चतुरोपि योर्णवान् ॥

*तेजस्विभावात्कपिलतां कपिलक्षणं हनुमच्चिन्हं(l 16) वहन्स यशोमयेन शरीरेण न वितीर्णवान्नतरत्काका तीर्णवानेवेत्यर्थः बुद्धिमद्भिः प्र(l 17)ति-* स्थानं कृतपरीक्षः ॥ 39.

रथकेतुसंनिधिमिवागतः पुरा
कपिलः किरीटकिरणैः कि(l.18)रीटिनः .
दनुजस्य येन महसादहत्पुरीं
तदिवाधुनापि वदनैर्विभर्ति यः ॥

रथे के(l 19)तुस्तत्र स्थितिमागतोर्जुनस्य ध्वजीभवन्नित्यर्थः अतोर्जुन-स्य मौलिरश्मिभिरिव कपिलो(l 20) हनुमान्पुरापि कदम्बवसरूपत्वेपि तदिव मुखेन वहति येन सहसा रावणस्य नगरीमदहत्(l.21) . [मौ]लिरश्मयः कपिलत्वेपि हेतुस्संभावितः ॥ 40.

मणिभिर्विलङ्घितचरस्य(l 22) [वारि]धेः
क्षितिभर्तुरोपधिभिरुद्धृतस्य च .
निजतेजसेव परिवारितः क्रमा-
दविचिन्त्यमन्त्र(l 23)[महि]मत्वमेति यः ॥

पूर्वं लङ्घितस्य समुद्रस्य रत्नैस्तथोद्धृतस्य शैलस्योपधिभिरिव निज(l.24)-[प्रभ]या परिवारित इव योतुलमन्त्रमाहात्म्यत्वमेति. मन्त्रौषधिमाहात्म्येन हि मन्त्रमहि(l 25**63)मा स्फुरति ॥ 41.

स्वपरिश्रमोद्धृतविलङ्घितक्षमा-
धरसिन्धुनायकपरिच्युतानिव .

---

1. Sic. Is it 'नवि' ? 2 Ms मुखे'. 3 सहसा lc under l. 20. Text. मद'.
4 Ms 'योग्निभारयं crossed with vertical strokes after 'ग्नि'. 5 Ms. 'शास-
6 Ms. 'द्वतस्य. 7 Ms. 'रिव lc. on margin.

⏑⏑–⏑(1.1)तुङ्गिमगभीरते गुणा-
वितरेतराव्यवहितौ दधाति यः ॥

स्वपरिश्रमेणोद्धृतोल्लङ्घितौ यौ(1.2) क्ष्माधरसिन्धुनायकौ ओषधिपर्वत-समुद्रौ ताभ्यां पतिताविव तुङ्गत्वगाम्भीर्ये गुणौ अन्योन्य(1.3)मव्यवहितौ संमुखश्रितावविरोधकरौ यो दधाति. तुङ्गत्वं गाम्भीर्यविपर्ययः गाम्भीर्यं तुङ्गत्व(1.4)विपर्ययः. अविरोधकाविति चिन्त्यम् ॥ 42.

फलशङ्कया विहितकम्पयोः पुरा
शशिसूर्ययोश्चकितयोरच्युतं महः.
परिद्व(1.5)द्धतामिव नयत्यहर्निशं
दधदन्वयाभरणदासकर्म यः ॥

चन्द्रार्कौ फले इति भ्रान्त्या दत्तो(1.6)त्प्लुतित्वाच्चकितयोश्चन्द्रार्कयोः पतितं तेजः कर्मभूतं यो वृद्धिं नयति. अत्र हेतुः चन्द्रार्कयोरन्वया(1.7)-भरणं पृथ्वीराजस्तस्य दास्यं धारयन् ॥ 43.

सचिवेन तेन सकलासु युक्तिषु
प्रवणेन तत्किम(1.8)पि कर्म निर्ममे.
मुखपुष्करं शिशुतमस्य यत्प्रभोः
परिचुम्ब्यते स्म नवयौवनश्रिया ॥

स(1.9)मस्तेषूपायेषु सामादिषु चतुरेण कदम्बवासेन तत्कर्म कृतं येन बालस्यापि राज्ञो मुख(1.10)पद्मं यौवनोचितया लक्ष्म्या परिचुम्बितम्. यौवनोचितं समस्तपृथ्वीजयं बाल एव कृतवानित्य(1.11)र्थः ॥ 44.

---

1 Can it be °पतितावनु° ? 2 Ms. °च° to °न्दन् &c. after °कः under l. 4. *Querry.* Is it written by some one who revised the Comm. ? The word described चिन्त्य is not the author's, but the Comm's. In the text °तस्यच° would also suit.-Cf. p.196, note 10

जलदाः क्षमापरिवृढस्य देवता-
तनुमाश्रितस्य चिकुरीभवन्ति ये .
शितिकण्ठता(l.12)ण्डवनिदानमाप तं-
द्ध्वनितं तदीयमिव वाचि सन्निधिम् ॥

विष्णुरूपमाश्रितस्य पृथ्वी(l.13)राजस्य ये मेघाः केशीभवन्ति तदीयं ध्वनितं गर्जितमिव वाचि सन्निधानमकरोत् मयूर(l.14)नृत्तकारणम् ॥ 45.

अवलम्ब्य जानुयुगलं श्रितामिव
प्रणयेन वैरिनगरागतां श्रियम् . (l.15)
क्षितिपस्य सान्त्वयितुमिच्छुना शनै-
र्भुजयोर्युगेन युगदघ्नता दधे ॥

शत्रुनगरेभ्य आगतां(l.16) लक्ष्मीं जानुद्वयमवलम्ब्य तिष्ठन्तीं सान्त्वयितुमिच्छुनेव तस्य भुजद्वयेन रथकाष्ठपरिमा(l.17)णता जानुव्यापित्वं दधे ॥

रसनासहस्रयुगले यया यया
भुजगाधिपस्य किल विद्य(l.18)या श्रितम
उपगम्यते मिलितया तया तये-
त्यवलम्बते स्म सुविशालतामुरः ॥

शेष(l.19)स्य जिह्वासहस्रद्वये यया यया विद्यया श्रितं तया तया विद्यया मिलितया पृथ्वीराजे(l.20) आगम्यते इतीवोरो विस्तीर्णतामधात् ॥ 47.

पृथिवीभरेण सह दिग्गजाष्टका-
त्सह दानसौर(l.21)भभरेण चाहृता .
पुरतोनुपार्श्वगतभाग्यमध्यगा
गतिरेति मन्थरतया समागमम् ॥

---

1 Ms. °लरः. 2 Ms. °विद्य°. 3 See pp. 18 and 42, note 3

अ[ष्ट](1.22)भ्यो दिग्हस्तिभ्यस्सकाशाद्भारेण दानसौरभभरेण सह, थानीतेव गतिर्मन्थरत्वमागता. म(1.23)न्थरगामित्वे हेतुरुत्प्रेक्ष्यते, पुरतः पार्श्वगतभाग्यमध्यगतत्वादिव गतेर्मन्थरत्वम् ॥

सुच[रित्र(1.24*)कीर्तन]विचक्षणान्कवी-
निव वक्रिमाणमुपदेष्टुमुद्यता.
स्मरचापचापलजिगीषया भ्रुवो-
रपरैव(1.1)[का]चिदुददीपि चातुरी ॥

ाःकीर्तनपरान्कवीन्वक्रत्वलक्षणाभ्यां भङ्गिं कौटिल्यं चोप-(1.2)देष्टुं प्रवृत्तेव काप्यवाच्या परा लोकोत्तरा चातुरी स्मरधनुजिगीषयेवो-ददीपि दीप्ताभूत् ॥ 49.

अपि(1.3) दृष्टिपातवशवर्तिनो विधे-
रुपयातयेव वदनारविन्दतः.
धनदान्तकाभिहितवामदक्षिणा-
श्रि(1.4)तबन्धया नयनयोश्श्रियोदितम् ॥

विधेर्ब्रह्मणः स्थानपद्मादागतयेव यतो दृष्टिपातमात्राय(1.5)त्तस्य श्रिया ास्य नेत्रयोरुदितं श्रितम्. कीदृश्या धनदान्तकाभ्यां वैश्रवणयमाभ्यामभिहि-तो वाम(1.6)दक्षिणाश्रितो बन्धो यस्यां सा. दृष्टिपातवशवर्तित्वे अयं भावः वद्दृष्टिपातोनुकूलः प्रतिकूलम(1.7)पि दैवमनुकूलयति प्रतिकूलस्त्वनुकूलमपि प्रतिकूलयति अत एव वामे नेत्रे यमोनुकू(1.8)ले धनदः. उपहितेत्यार्पः पाठः. उपहित उपरञ्जितो वामदक्षिणो स्थितिबन्धो यस्याः ॥(1.9) 50.

रणसाहसाय हरितां वराहतां
क्षितिधारणाय मिलितां भुजद्वये -

1 Ms. 'याभ'. 2 Comm requires वसनार'. 3 Ms. 'स्थिति'. 4 Ms. 'त्वेवं. 5 Ms. वास'. 6 Ms. 'इचर्यद'. 7 Ms. 'क्ना.

मुखयोर्दिदृक्षुरिव भू(1 10)तपूर्वयो-
र्दृगभून्मुहुर्मुहुरपाङ्गचुम्बिनी ॥

अस्य दृष्टिर्नेत्रान्तगामिनी पुन पुनरभूत् अत्र (1 11) सभाव्यते रक्षार्थं सिंहता भूमिधारणार्थमादिसूकरता भूतपूर्वयोर्मुखयोर्द्रष्टुमिच्छुरि(1 12)व अत्र भुजद्वये श्रितार्थं ॥ 51.

कपिलस्य पश्चिममुखस्य या रुचिः
कुपितेषु तामपि कदा(1 13)चिदुद्वहत् .
अपरत्र वनितुमिवाविचक्षणा
वदन बलात्परिचुचुम्ब दिव्यता ॥

पञ्चानन(1 14)स्य विष्णो कपिल मुखमित्यागम कपिलवर्णस्य पश्चिममुखस्य या रुचिराताम्रता ता(1 15)मपि कुपितेषु कोपेषु विभ्रत्तस्य मुख दिव्यता देवतात्मता रमणीयता च बलाच्चुचुम्ब अ(1 16)तस्सभाव्यते तस्मादन्यत्र स्थातुमकुशलेव ॥ 52

वदने दृशोश्च वनजश्रिया स्थितं
हरिता च(1 17) वामनतया सहोदरे .
धियि भार्गवत्वमभिरामकृष्णता
चिकुरेषु सर्वविषयेषु बुद्धता ॥(1 18)

वनज पद्ममुत्पल च तच्छोभया मुखे दृशोश्च स्थितम् केशेषु मनोहरासितता स्थिता सर्वे(1 19)पदार्थेषु प्रबुद्धता स्थिता वनजा मत्स्यकूर्मवराहा हरिर्नरसिंह वामनो बलिजित् भार्गव परशु( 20)राम अभिरामश्रीराम कृष्णो वासुदेव बुद्धस्सुगत ॥ 53.

नव लक्षणान्यपि पुरातनान्यमू(1 21)-
[न्यवलम्ब्य] भूपतिरधत्त तद्बलम् .

1 Ms मिहिता 2 Ms तम् 3 Ms रक्ष 4 Sic Read काप्यु?
5 Ms म 6 Ms त्रयाद्भ्'le under 1 20 7 Ms कृ 8 Ms स्थ

निरुपप्लवां रचयितुं क्षितिं यतो
दशमावतारकरणीयम(122)[ग्रहीत्] ॥

एतानि नवसंख्यानि पूर्वजन्मभवानि अपि लक्षणान्यवलम्ब्याश्रित्य राजा तद्बलमवहत् (1 23**64). नृसमरलोभूदित्यर्थ.. ततो भूमेरुपद्रवं निवारयितुं दशमावतारे कर्तव्यमग्रहीत ॥. 54.

अयशस्वि[ता](11)प्रथमबीजकल्पया
विजितस्य रूपविषयान्मनोभुवः.
वदनाधिवासमिलितालिरेखया
कृ(12)तपूर्वरङ्गमिव कूर्चलेखया ॥

मुखपद्मसौगन्ध्यागतभ्रमरमालासदृश्या तथा रूपेण जि(13)तस्य कामस्य अपयशोबीजसदृश्या श्मश्रुलेखया कृतोऽयौवनस्य कामजयस्य वा पूर्वरङ्गो(14) येन सतं ॥ 55.

अवतंसकुण्डलमरीचिरोचितं
शशिबिम्बतां स्पृशति गण्डमण्डलम्.
परितापस(15)म्पदमिवान्यपार्थिवै-
र्जनितां न्यपोहितुमुतस्य तिष्ठतः ॥

भूषणकुण्डलरश्मिभूषित कपोल (16) चन्द्रकान्ति धारयति सुरमध्ये वसतस्तस्यान्यराजै. कृत तापमिव वारयितुम ॥ 56.

यदि चापकौ(17)शलकलामवाप्नुया-
ममुतो भवेयमभयस्तदीश्वरात्.
इति चेतसा च वपुषा च निर्जितो-
प्यभिको(18) रतेरनुचरत्वमाययौ ॥

1 Ms. भवि let under 1 23 2 Ms. 'भाव'. 3 Scil. कन्दर्पस्य (verse 56).

यद्यहमेतस्मात्पृथ्वीराजाद्धनुर्विद्यामाप्नुयां तदा हरान्निर्भयः स्यामित्यत (l.9)इव रतेरभिकः कान्तः कामोप्यस्य राज्ञोनुचरत्वमागतः . शान्तेन चेतसा कान्तेन च देहेन जितः ॥(l.10) 57.

प्रथमं शरेण पृथिवीभृतं ततो
भुजयोर्बलेन शिवचापतां गतम् .
किल यो बभञ्ज विशिखाः(l.11) शिलाभिदो
यदमुष्य संप्रति किमेतदद्भुतम् ॥

अस्य राज्ञश्शरा शिलाभिदः पाषाणविदा(l.12)रका यद्भवन्ति तन्नाश्चर्यम् यतो यः पूर्वं शरेण क्रौञ्चाद्रिमभिनत् ततो भुजबलेन शिवचापत्व(l.13)मापन्नं पृथिवीभृतं मन्दरपर्वतं बभञ्जास्फोटयत् ॥ 58.

जविना हयेन विहरन्नलङ्घय-
न्नृप(l.14)तिर्यदेकमन इत्यदः कियत् .
अतिरंहसोस्य दधते हि वाजिनः
पटुतामनेकमनसां विलङ्घने ॥(l.15)

वेगवताश्वेन संचरमाणो राजा यदेकमप्रतिमल्लमनः शकटमलङ्घयज्जितवानित्यदः किय(l.16)द्भवति . न किंचिदित्यर्थः . अस्याश्वा ह्यधिकवेगा अनेकमनसां जये सामर्थ्यं दधते . चित्तादप्यति(l.17)वेगास्तदश्वा इत्यर्थः . अनेकमनोजयशक्तो यदेकमनो जयति तत्र किंचित् एकापेक्षयानेके(l.18)षामधिकत्वात् ॥ 59.

हयमेष यं यमधिरोढुमिच्छति
प्रसभं प्रयाति स स तार्क्ष्य(l.19)तामिव .
विशिखं च कुत्रचन यं यमस्यति
प्रतिपद्यते स स महास्त्रतामिव ॥

---

1 Ms. हरा॰ lc. under l. 8. 2 Ms. ॰प॰ lc. under l 10. 3 Ms. ॰शि॰. 4 Ms. क्रोंचा॰. 5 Ms. वाधिक.

यं यमश्वम(1.20)यमारोहति स सोऽश्वो गरुडत्वं प्राप्नोति यं यं शरं च क्वापि क्षिपति स स शरो महास्त्रतामिवाप्नोति ॥(1.21)    60.

अपि यं यमाश्रयति मत्तवारणं
स स सोदरत्वमिव गच्छति श्रियः.
करपुष्करं नयति यं य(1.22)मप्यसिं
स स नन्दकत्वमवनेः प्रपद्यते ॥

तस्य वाहभूतो हस्ती श्रियस्सोदर ऐरावणस्तद्भावमि(1.23)व गच्छति तत्करस्थः खड्गो भूमेर्नन्दकत्वं ह्लादकत्वं विष्णुखड्गत्वं च प्राप्नोति ॥    61.

[अतिच(1.24*)श्चलं य]दतिदूरवर्त्ति य-
द्यदतीव तीक्ष्णमपि कर्कशं च यत्.
मदनस्य चित्तमिव नावहेलया
सुभिदं(1) [व]भूव न तदस्य धन्विनः ॥

अतिचलत्वादियुक्तं यल्लक्ष्यं तदस्य सुभिदं शोभना भिदा भेदो य-(2)स्य तन्न नाभूदभूदेवेत्यर्थः. यथा चित्तं कामस्य सुभिदं तच्चातिचलत्वादिसहितम् ॥(3)    62.

सकलाभिरिन्दुवदनाभिरात्मनो
रजनीपु कण्ठगत एव वीक्ष्यते.
बहुवल्लवीपतिदशोप(4)योगिनीं
बहुरूपतां पुनरपि श्रयन्निव ॥

सर्वाभिस्स्त्रीभिस्स राजा स्वप्ने कृतालिङ्गनो दृश्य(1.5)ते अतस्संभाव्यते बहूनां षोडशसहस्रसंख्यानां वल्लवीनां गोपीनां पतित्वे उपयुक्तामने(1.6)करूपतां पुनरपि श्रयन्निव ॥    63.

---

1 Ms. सोद॰.   2 Ms. सनस्य.   3 Ms. दन्वि॰.

उपगन्तुमेतदनुगत्वमर्थिता
हृदि पोस्फुरीति यदपि द्वयो(l 7)रपि .
अपरागतस्तदपि बिभ्यतो ध्रुवं
मदनं वसन्तशशिनौ न मुञ्चतः ॥

कामाद्राज्ञोधिक(l 8)सौन्दर्यदर्शनाद्वसन्तचन्द्रयोरेतस्यैवानुचरत्वं लब्धुं. यद्यपि अभिलाषोत्यर्थं स्फुरति तथापि ध्रु(l 9)वं लोकापवादभयाद्वसन्तचन्द्रौ कामं न त्यजतः ॥ 64.

इति यौवनेन विनयानुयायिना
क्रिय(l 10)माणसेवमवलोक्य पार्थिवम् .
अनुरक्तभाव इव शिश्रिये वला-
न्न कया निविश्य हृदि राज(l 11)विद्यया ॥

एवं विनयानुगतेन यौवनेन तं राजानं कृतसेवं दृष्ट्वा तस्य बुद्धौ श्रित्वा कया न राज(l 12)विद्ययानुराग इवाश्रितः . अनुरागवत्य इव राजविद्यास्तं भेजुरित्यर्थः . यं च पुरुषा अपि(l.13) कामयन्ते तं प्रति सर्वाः स्त्रियोनुरागिण्यो भवन्ति ॥ 65.

कुलशैलदिकरिभुजङ्गमाग्रणी-
कम(l.14)ठेन्द्रकोलपतिकालरुद्रभाक् .
इयमेककेन सकला मयोह्यते
पृथिवीति विंशति(l 15)मुवाह यो भुजान् ॥

कुलपर्वतादीन्भजन्ती . कुलपर्वतादिभिरूढेत्यर्थः . इय पृथ्वी स(l.16)कला मया केवलेनोह्यते इतीव विंशतिसंख्यान्भुजान्योवहत् ॥ 66.

विदलय्य तं कुलम(l 17)हीधरादिका-
नवधार्य विस्मृतधराधृतीनिव .

1 Ms. सदनं 2 Ms °शचिनौ. 3 Ms °मेव°. 4 Ms. °दानु°. 5 Ms °र्वाञ्छियानु°.

उपगम्य दिव्यतनुतां कराङ्गुली-
दश(1.18)कद्वयेन वसुधां बभार यः ॥

तं रावणं हत्वा कुलपर्वतादीन्विस्मृतभूधारणाभ्यासा(1.19)न्निश्चित्येव दिव्यतनुतां चतुर्भुजत्वं प्राप्याङ्गुलीविंशकेन यो भुवमवहत् ॥ 67.

स पुनर्मद(1.20)ग्रजसुतासुतो भव-
न्द्विभुजोपि रक्षति चराचरं जगत् ।
इति वार्तया कृतकुतूहलः क्रमा(1.21)-
द्भुवनैकमल्ल इति बन्धुराययौ ॥

स नारायणो मद्भ्रातृपुत्रीपुत्रो भवन्द्विभुज एव सम(1.22)स्तं विश्वं धारयतीति श्रुत्वा कौतुकी भुवनैकमल्लनामा बन्धुः पृथ्वीराजमागतः ॥ 68.

निय(1.23)[सन्ति] शक्रदिशि कल्पशाखिनो
मणयो यथेप्सितफलाश्च रोहणे ।
शितिकण्ठवा(1.24--65)हनदृपानुरागिणी
सुरभिः प[वित्रयति चोत्तरां दिशम्] ॥

............[द](1.1)क्षिणदिक्स्थिते रोहणे रत्नानि कांक्षितफलप्रदानि सन्ति ईश्वर............(1.2)उत्तरां दिशं पावयति ॥ 69.

उपयाम्युदारचरितोपसेव्यतां
कथ—⏑—⏑—⏑—⏑—(1.3) ।
अगमद्यथा वरुणदिक्पवित्रतां
भुवनैकमल्लचरणाब्जधूलि[भिः] ॥

............(1.4)दैः कल्पद्रुमादिसमैः पुरुषैः सेवनीयतां कथं गच्छामीत्यवो नू[नं]............(1.5)यथा सा भुवनैकमल्लस्य चरणरेणुना पवित्रतामगच्छत् ॥ 70.

---

1 Ms. °तु(°. 2 Ms. °ह्व°. 3 Ms. °द° l. under l. 22. 4 Ms. ति°. 5 Ms. प. ह. रि. on margin. 6 Ms. °भा°.

युधि करशरीरनिरपेक्षतां(16) विना
प्रविशेदुपेक्षिततनोश्च किं धनैः .
इति यो दधात्यखिलदातृतामयं
स्फुटमेक एव(17) पुरुपार्थलक्षणम् ॥

देहनिरपेक्षा एव युधि प्रविशन्ति . युद्धे जयपराजययोरनिश्च(18)यात् . शरीरनिरपेक्षस्य धनैः किम् . शरीरोपयोगित्वादेव तेषामिति भावः . इत्यतो हेतोर्योऽपि(19)दातृत्वमयमेव पुरुपार्थं दधाति ॥ 71.

यदि न प्रदक्षिणमिषेण रक्षकौ
प्रभविष्यतो शशिरवी द्व(110)योर्दिशोः .
विदलय्य तद्विरचयिष्यदेव यः
कनकाचलं सकलमेव पात्रसात् ॥

दक्षिण(111)पार्श्वप्रक्रमणव्याजेन चन्द्रार्कौ मेरुसम्बन्धिन्योर्द्वयोर्दिशोः पार्श्वयो रक्षकौ यदि न स्यातां तस्स मे(112)रुं शकलीकृत्य पात्राधीनं कुर्यात् ॥ 72.

न स रोहणस्य मणिरस्ति रक्षितुं
भुवनैकमल्लभय(113)मस्य यः क्षमः .
द्विजवत्सलात्पुनरतो वदन्यतः
परिरक्षिता कलशनन्दनो मुनिः ॥

तस्मा(114)द्दातुर्यो रोहणं रक्षितुं शक्तस्स कोपि मणिरस्याद्रेर्नास्ति अगस्त्यस्तु ब्राह्मणप्रियाद्दातु(115)स्तस्माद्रक्षिताभूत् . अयं भावः . यद्यहं रोहणाद्रत्नान्यानेतुं गच्छामि तदागस्त्यब्राह्मणो द(116)क्षिणदेशो निवसं-क्षोभात्क्षोभं करिष्यति अतो भुवनैकमल्लो रत्नाहरणार्थं नागच्छत् ॥ 73.

---

1 Ms. श्रपि. 2 Ms. °निभेन. 3 Ms. °का°. 4 Ms. पाध°. 5 Doublet of वदान्य. *Cf* p. 120, note 4, ( V. 83 ).

अपग(117)जिता नयनयोर्न निर्वृते-
रविधायिका चर कदाचिदीक्षिता .
तडिदीदृशीति कनक‿—(118)भृताः
ककुभो विभाव्य जनता विसिस्मिये ॥

इतः प्रभृति इति ये इत्यन्तं मरुत्तवर्णनपरं कुल(119)कम् ॥

गर्जितवर्जिता तथा दृशां भीतेरकर्त्री विद्युन्न जातु दृष्टेत्यतो हेतोर्लोकः स्सुवर्णपूर्णा(120) दिशो दृष्ट्वा साश्चर्योभूत् ॥  74.

सुरदीर्घिकात इव मारुताहृतैः
कनकारविन्दमकरन्दबिन्दुभिः(121) .
प्रथमैश्शशंस पृषतैर्हिरण्मयैः
क्षितिरुप्तसर्षपकणेव मङ्गलम् ॥

वायुना गङ्गाया आ(122)नीतैर्हेमपद्मकिञ्जल्कैरिव नवैस्सुवर्णवृष्टिकणैः करणैरुप्तसर्षपेव भूर्मङ्गलमसूचयत् ॥(123)  75.

अथ मेरुसन्धिगतपादपस्तव-
त्कनकापगाभिरिव मेदुरोदरैः .
जलदैः प्रदाय [कनकानि](124*) भूरिशः
परिशोध्यते स्म कनक[र्णमात्मनः] ॥

............ये पादपास्तेभ्यस्स्रवन्तीभिस्सुव(11)र्णनदीभिरिव पूरितोदरैर्मेघैर्बहुव............कनकवर्षणादृणमिवं शोधितम् ॥(12)  76.

क्रमशस्सुवर्णगिरिपक्षतिद्वयं
शतकोटिपाटितचरं शतक्रतुः .

---

1 Ms Sic Is it चक्र ?  2 Is it 'कन्यान्' ?  3 See verse 83, below.
4 Ms. मञ्जु°.  5 Ms °मेम  6 Ms. पत्त°.  7 Ms. °करोषध°.  8 Ms. °भत.

विरचय्य चूर्णशा इव प्रवृष्ट(3)वा-
न्विविधैः प्रसादमुपगम्य मन्युभिः ॥

शतकोटिना वज्रेण पूर्वं पाटितं मेरुपक्षद्वयं क्रमे(4)ण चूर्णं कृत्वेवेन्द्रो नानायद्वैः प्रसन्नो ववर्ष . मन्युभि. क्रोधैः प्रसादं प्राप्येति विरोधः॥ 77.

शनकैर्हि(5)रण्यरसमेव लोहितं
स हिरण्यगर्भ इव सर्वतोमुखः .
अविशङ्कशङ्करकराङ्गुलीनख(6)-
क्षणलूनपञ्चममुखोवमद्दिवः ॥

स हिरण्यगर्भो ब्रह्मेव लोहित रक्त हिरण्यरसं द्रुतसु(7)वर्णमेव दिवस्स्वर्गादमुचत्. हिरण्यगर्भत्वाद्धिरण्यवमनमुचितम सर्वतोमुखश्चतुर्मुख.(8) तथा निश्शङ्कं शङ्करेण करांगुल्या क्षणेन लूनं पचमं मुख यस्य स: . यदा तु सुवर्णवर्षमपत(9)त्तच्छिन्नशि[रसो ब्र]ह्मणो रक्तमेवापतदित्यर्थः ॥78.

शिववीर्यपानमतिदुष्करं पुरा
विरचय्य हव्यम(10)पि नव्यमश्नता .
अधिरुह्य शून्यमिव दूरमम्बरं
वमनं व्यधीयत हिरण्यरेतसा ॥

अतिदुर्धरं(11)मपि शिववीर्यपान पूर्वं कृत्वा नवं हविश्च भुंजानेन हिरण्यरेतसाग्निना वमनमिव कृतम(12) वमनस्य जुगुप्सनीयत्वाच्छून्यं दूरमाकाशमधिरुह्य . हिरण्यरेतस्त्वाद्धिरण्यवमनोक्तिरस(13)गच्छते . दुर्धरं भुक्त्वैव यः स्नेहं भुङ्क्ते स च वमति ॥ 79.

अवचित्य पूर्वममरापगान्तरा-
त्तपनीयपुष्करवनी(14)रिवाखिलाः .

---

1 Ms °सरिपत्र 2 Is it यदा तत्तु° ? 3 Ms °स्तुना 4 Ms सूर्यं°
5 Ms वचने, 6 Sic Is it °दुष्कर° ? 7 Is it द्रुतं ? 8 Ms °शिर.

समपादि गालितवता निजोष्मणा
पृथिवीसुतेन पृथिवी हिरण्मयी ॥

गङ्गा[1](। 15)या हेमपद्मवनीरुचित्य स्वोष्मणा करणभूतेन द्रावयता भौमेनेव भूमिर्हेममयी संपादिता(। 16). मातुर्हि माहात्म्यं पुत्रा जनयन्ति ॥ 80.

उपनीयमान इव खेचरीगणै-
श्चरुकर्मणे खगपतौ विप(। 17)न्नताम् .
हरितालपिञ्जरितदिग्वधूमुखै-
श्च्युतमन्तरालगरुतां लवैर्लवैः ॥

अन्तराले मध्ये ग(। 18)रुतां सूक्ष्मसूक्ष्माणां पक्ष्मणामिवांशैरंशैरच्युतम् पतितं. भावे क्त.. नभश्चरीभिश्चरुनिमित्तं ग(। 19)रुडे लुञ्चितपक्षत्वं नीते सति. खेचरीणां खगचरांरुचितत्वादिति भाव . हरितालेनेव क(। 20)पिशीकृतं दिङ्मुखं यैः. नेयं कनकवृष्टिः किं तर्हि गरुडसुवर्णमयपक्षकणा इव पतिता इ(। 21)त्यर्थ. ॥ 81.

द्रुहिणाण्डभाण्डमतिमात्रसंकटां
परिपूर्य कीर्तिषु गतासु दुस्स्थताम् .
परितक्ष्य(। 22)माणमिव तत्प्रजासृजा
निरवग्रहं कनकवर्षमाचरत् ॥

तद्ब्रह्माण्डमिव निर्निरोध सुवर्ण(। 23)[वृष्टि व्यधा]त्. अत्र हेतूत्प्रेक्षा. ब्रह्मणा तक्ष्यमाणमिव. तक्षणे हेतुमाह मरुत्तयशस्सु आह्व(। 24)·····रयित्वा दुस्स्थतामसान्त्व गतासु सतीषु यतोतिमात्रसंकटाम् ॥ 82.

इति यः प्रसीदति(। 25**66) विभावितावृता-
दविशिष्टतां ग[मितवा]न्सं भारतम् .

1 Ms गङ्ग° 2 Ms °डलु° 3 Ms °तं le under l. 19 4 Ms. °न्न° 5 Ms °स्मुय°. 6 Read ब्रह्माण्ड पूरयित्वा 7 Ms °टम् 8 Ms °स्म

स मरुत्तं—⏑⏑⏑—⏑—⏑—
[भुवनैकम](1.1)ल्लमुपमानमिच्छति ॥

विभौ परमेश्वरे प्रसन्ने सति इलावृतंव············[भार](1.2)-
तवर्षं भूमण्डलमनयत्स मरुत्तोपि हरपुरे भुवनैकमल्लमुपमा············,
[मि](1.3)च्छतीत्यर्थः ॥ 83.

अहिमांशुवंश्यसुभटानुयायिता-
मिति सोमवंशसु⏑——⏑—⏑—[4]
[अतितप्ततां च](1.4) जडतां च पस्पृशु-
र्न विशस्सनातनमधूत्सवा इव ॥

चन्द्रान्वयेषु म···············(1.5)न्सूर्यवंश्यस्य पृथ्वीराजस्यानु-
चरत्वं प्राप्ते सति प्रजास्तापं च जाड्यं च नाग[च्छन्]············(1.6)
इव. वसन्ते हि शीतातपयोस्साम्यम् ॥ 84.

प्राज्यप्रजाभ्युदयवर्धनदत्तं[चित्ते
दैवातिशायिबलयुग्भुवरी](1.7)नैकमल्ले.
संकीर्णवाल्ययुवभावगुणानुभावं
पस्पर्श वर्महरता हरि[राजदेवम्].

············(1.8)मिश्रो बालत्वयौवनयोर्गुणानुभावो यस्य तं हरि-
राजं वर्महरतास्पृशत्············(1.9)दित्यर्थः. प्राज्ये महति प्रजोदये
विपये सावधाने तथा दैवोल्लंघिपौ[रुष]············(1.10)हरिराजो बा-
ल्यमुल्लंघयति स्मेत्यर्थः ॥ 85.

यन्मेघनादफणिपाश[निपीडनेन
प्राग्राम](1.11)लक्ष्मणतनावभिभूतिरासीत्.

---

1 Ms. 'रमु'. 2 Ms. 'तव'. 3 Ms. 'नेक'. 4 Is it 'मधुरे (or मुभटे) समाश्रिते'? 5 Ms. 'न्नुत्र 6 Ms. 'दु'. 7 Ms. 'वरत-

तेनायमत्र जनने जननीपितृव्य-
मूर्त्यादि[पद्यत सदानुचरो गरु](1.12)त्मान् ॥

पूर्वजन्मनि रामलक्ष्मणमूर्तौ मेघनादस्य रावणसूनोः फणिपाशैः पीडित............(1.13)भवो यदासीत्तेनैव हेतुनेवास्मिञ्जन्मनि नित्यानुयायी गरुडो मातृपितृव्यरूपेणोत्पन्नः. पूर्वं मेघ(1.14)नादेन सर्पास्त्रं दत्वा रामलक्ष्मणौ मत्सन्निधानाभावात्पीडितावितीव विमृश्यास्मिञ्जन्मनि भुवने(1.15)कमल्लरूपेण गरुडः पृथ्वीराजसेवां नात्यजदित्यर्थः ॥ 86.

मैनाकशैलवदखण्डितपक्षपाते
पित्रन्वया(1.16)भरणताजुषि तत्र वीरे.
देवी व्यराजत कुमारविनायकाभ्यां
कर्पूरदेव्यचलराजसुता सुताभ्याम् ॥(1.17)

अचलराजस्य पुत्री कर्पूरदेवी पुत्राभ्यां कुमारविनायकाभ्यामप्राप्तप्राप्तराज्याभ्यां शुशुभे पितृकु(1.18)लस्य भूषणभूतेऽखण्डितस्नेहे भुवनैकमल्ले सति. अचलराजसुता गौरी च मैनाकेऽखण्डितः पक्षा(1.19)भ्यां पातो यस्य तस्मिन्सति गणपतिकुमाराभ्यां पुत्राभ्यां शोभते ॥ 87.

नागानां दमने स एव पटिमा सत्यं तदे(1.20)कात्मतां
प्राप्तं दिव्यपथावगाहनविधौ सैवातिरंहस्विता.
पृथ्वीराजसहायतामनुभवन्नेकं सुप(1.21)र्णः पुन-
र्यश्चामीकरपक्षपातमसुचत्तन्मानवत्वं दधौ ॥

नागानां हस्तिनां फणिनां च दमने स एव पटि(1.22)मा भवति. गरुडसदृश इत्यर्थः. सत्यं गरुडेन सहैकात्म्यं प्राप्तम्. गरुडो हि सत्यः स च सत्यभापी(1.23). दिव्यपथस्य भव्यमार्गस्याकाशस्य चावगाहने स एव वेगः सुपर्णरशोभननागवल्लीदल............(1.24*)............[प]क्षपातं

1 Ms. 'नैरि'. 2 Ms. 'त्यादि'. 3 Ms. 'वेव'. 4 Ms. 'श्रंसा'. 5 Ms. मेवा'. 6 Ms. '-न्वया'. 7 Ms. 'सांय'. 8 Ms. दमने lc. under l. 22

लोभं सुवर्णमय[पक्ष]त्या पातं यदत्यजत्ततो हेतोर्मानव(1)··········
···[पृ]थ्वीराजस्य सहायतां भजन्. नागदमनादिभिर्गुणैर्यदयं गरुड
ए(2)व·············यां सुवर्णपक्षपातमोचान्मानवत्वमवेह·········
सत्यशब्दस्य गरुडवाचिनो नपुंसकलिङ्गं········· ॥ 88.

इति गरुडहनूमं(3)[न्मूर्तिभेदानुगत्वा-
न्नृपतिरथ] पमर्णो रामभावप्रभावम् .
तरितुमतितरस्वीभूय सप्तापि सिन्धू(4)-
⏑ ⏑ ⏑ ⏑ ⏑ ⏑ — — ⏑ — मियार्यं ॥

एवं गरुडहनुमतोर्मूर्तिभेदस्य भुवनैकमल्लस्य कैदम्बवासस्य चानुग-
त्वा(5)·········[पृ]थ्वीराजस्सप्तसमुद्रांस्तरितुं बलं प्राप्य लोकहिताय
प्रयत्नं कृतवान्(6)······येन समुद्रमतरत् अहं पुनर्गरुडहनुमदवतारा-
भ्यां भुवनैकमल्लकदम्बवासाभ्या(7)······[मगरु]ड्दिति भद्रम्॥ 89.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्व(8)[स्य च
च्छायाभाजि किरात]काव्यविवृतौ विश्वस्य रम्यश्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ(9)[ज्योत्स्नाकरो लावणिः?]
[सं]वेशं परिवाञ्छति प्रतिपदं शास्त्राध्वनि ग्लानिमान् ॥

श्रीलोल(10)[राजसुतपण्डितभट्ट]नोन-
राजात्मजो विवरणेन स जोनराजः .
सर्गं व्यधत्त नवमं सुखमत्र पृ(11)[थ्वी-
राजाख्य]राजविजयाभिधकाव्यराजे ॥

पृथ्वीराजविजये नवमस्सर्गः ॥(12)

---

1 Ms. °नाभि°. 2 Ms. °स्रान°. 3 Ms °स्वव°. 4 Ms. lc. at top of page. 5 Ms. संथस्य 6 Ms. °नुप°. 7 Sic. Is it °रय ज्ञुपायो ? 8 Ms. °सिनि. 9 Ms. °यु°. 10 Ms. °मिशय. 11 Ms. कं° to °चा° lc. on margin.

# [ दशमः सर्गः ]

अथ विघटनसज्जबाल्यसख्ये
पिशुनगिरामपथेऽपि यौवनस्य ।
दिशि दिशि विचचार पु(1.13)ष्पचापो
नृपतिसुताशयसन्धिबन्धभूतः ॥

पिशुनगिरो भेदमुत्पादयन्ति । तासामविषये(1.14)पि यौवने विघटमानं विदीर्यमाणं बाल्येन सख्यं यस्य तस्मिन्सति कामो राजकन्याचित्तस्य राजविषये(1.15)·········तः प्रतिदिशमचरत् । पृथ्वीराजस्य यौवनं श्रुत्वा सर्वा राजकन्या रागमभज(1.16)न्नित्यर्थः ॥ 1.

प्रथमसमयविप्रलम्भखिन्ना
स्वसमसमग्रगुणावरोधभङ्ग्या ।
अथ ज(1.17)नकसुतेव मूर्तिभेदै-
र्बहुभिरमुं परिरभ्य निर्ववार ॥

पूर्वजन्मनि विरहेणोद्विग्ना सीतेवात्मसमानां(1.18) संपूर्णगुणानामन्तःपुराणां व्याजेनानेकैर्मूर्तिभेदैरमुमालिङ्ग्यातुष्यत् । अन्तःपुररूपा बहूर्मूर्तीः(1.19) कृत्वा सीतैव तमसेवतेत्यर्थः ॥ 2.

अनुगतनवयौवनश्रियापि
व्यपनयतापि धृतिं पतिव्रतानाम् ।(1.20)
समसमयमयत्नताङ्गनानां
नरपतिरूपगुणेन कञ्चुकित्वे ॥

---

1 वि° to °ख ]c. under l. 11. 2 Ms. °रुग्°.

सयौवनशोभेनापि सतीनां धृतिं(l.21) हरतापि राजरूपगुणेन स्त्रीणां सौविदल्लत्वे समकालमेव यत्नः कृतः. पृथ्वीराजादन्यराजानाम(l.22)··· ·········रतेपु स्त्रीणां स्पृहा नाभूदित्यर्थः. श्रीधृत्योः स्त्रीलिङ्गत्वादपि विरोधवाचकः क(l.23)·········रस्त्रीगाङ्गेया(?)···भवन्ति ॥ 3.

अपि सलिलशयस्य यस्य सेवा-
मकुरुत तं(l.24**67) परिरब्धुमुत्सुकानाम् ·
⏑⏑⏑⏑⏑[मसूययेव] निद्रा
नयनपथं न ज[गाम कामिनीनाम्] ॥

[जलशय](l.1)नस्यापि यस्य निद्रा सेवामकार्षीत्तमा[लिङ्गितुं का]ङ्क्ष-न्तीनां स्त्रीणां नयन·········[अत्रो](l.2)त्प्रेक्ष्यते असूययेवेति. यं जलेपि श्रितं [न तत्या]ज तमधैताः कथं प्रार्थ··········. 4.

⏑⏑⏑⏑(l.3)रवदेवं तं सिषेवे
विनयवशंवदता वदान्यता च ·
परिकलितवतीव दु⏑––
⏑⏑⏑⏑–⏑⏑––⏑(l.4)यांचन श्रीः ॥

कामातुरेव विनीतिर्दातृता च तं सिषेवे विनीतिर्दातृते··········· (l.5)परिचयं नास्पृशत्. विनयपूर्वं दातृत्वेपि सति तस्य लक्ष्मी रंसिकैवा- 5.
. भूदित्यर्थः ॥

परमपुरुष[का](l.6)रदुरिश्रताभ्या-
मुपगमितो वशवर्त्तितां भुजाभ्याम् ·
विधिरविधुर एव भूरिवारं
रणसमयानवतारयां(l.7)चकार ॥

---

1 Is it मदनपरवशेव ?. 2 So Ms. Is it कदा ?. 3 or is it 'दर्शायेषि'?. 4 Ms. '3.

महता विक्रमेण दुरिश्रताभ्यामूर्ध्मायमाणाभ्यां भुजाभ्यामायत्तीकृतो विधिरनुकूल एव त(1.8)स्य वहून्वारान्संग्राममुदपादयत् ॥ 6.

अथ कुविधियदृच्छयेव नागा-
र्जुन इति निन्दितभिक्षुयोग्यना(1 9)मा ।
निगडगृहपरिग्रहाय मातु-
र्ग्रह इव विग्रहराजवल्लभायाः ॥ 7.

पितुरखिलनृपाविल(1 10)ङ्घ्यभाग्या-
द्भुतवलनिर्मथनैकवीरजन्मा ।
गुडपुरमिति दुर्गमध्यरोह-
न्मधुररसाहृतिदोहदेन वालः ॥(1 11)

नागार्जुनस्य यः कुविधिः कुत्सितं पूर्वकर्म तेन हेतुना या यदृच्छा तया हेतुभूतया निर्मितं मातापितृ(1 12)भ्यां कृतं भिक्षुयोग्यं भिक्षुषु प्रचुरतयाश्रितं नागार्जुन इति नाम यस्य स वालो विवेकशून्यो गुडपु(1 13)रसंज्ञितं कोट्टमारोहत्. केन हेतुना मधुरा या रसा भूमिस्तस्या आहृतौ हरणे दोहदो लौल्यं. किमर्थं स्य(1 14)स्या मातुर्निगडगृहे बन्धने परिग्रहार्थं न तु कोट्टंजयायेत्यर्थः.पितुर्विग्रहराजस्य संबन्धिनस्सक(1 15)लै राजभिरलङ्घ्यस्य भाग्यानामद्भुतवलस्य निर्मथने एकवीरं.जन्म यस्य सः. वालाश्च वालाश्रयो (1 16)यो ग्रहो मातुर्निगडायैव भवति तस्याः पुत्रोपयोज्यमध्यासितत्वात्. मधरस्य रसस्याहृतौ(1 17) आहारे लौल्येन ॥ 8.

प्रशमितभुवनैकमल्लवीर्य-
ज्वलनविलम्बकदम्बवासवायुः ।
समुदितपुरु(1 18)पार्थभागधेयो
निरगमदाहवसाहसाय देवः ॥

1 Ms 'मुष्मा'.  2 Ms. 'द्दुत'  3 Ms. 'द्राज'.  4 Is it वालस्य च ?.
1 Ms 'मुष्मा'.  6 Ms.'स्यह'.
5 Is it 'योग्निपथ्याधिन्वात् or 'योग्यमेध्याधित्वात् ?

भुवनैकमल्लस्य यो वीर्यज्वलनस्तेन विलम्बो(l.19)र्थादरिदूरीकरणं तथा कदम्बवास एव वायुस्तौ प्रशमितावनपेक्षितौ येन सः यतो युगप(l.20)त्रिविष्टपौरुषभाग्यो देवः पृथ्वीराजो युद्धाय निर्गतः ॥ 9.

कुलमुदधिनिवासि कालदत्ता-
भय(l.21)मिव हैमवतीसहोदरस्य .
युधि सहचरतां नरेन्द्रमूर्ते-
र्नरकरिपोः करिचक्रमाललम्बे ॥

समुद्रे(l.22) निवसत्तथा रणकाले दत्ताभयं पार्वतीसोदरस्य मैनाकस्य कुलं गिरिसमूह इव हस्तिगणो(l.23) राजरूपस्य विष्णो रणे सहचारित्वमापत् ॥ 10.

नृपतिमनुचचार चारुरिक्थ-
क्रमत इवो⏑⏑−⏑⏑⏑(l.24*)−− .
⏑⏑⏑⏑⏑⏑−ईवान्तरिक्ष-
भ्रम⏑⏑−⏑[म]नन्तमश्वयूथम् ॥

अन्तरन्तरिक्षे आ(l.1)············वमानामित्यर्थः अश्वकुलं राजानमन्वगच्छत् अतः संभाव्यते रिक्थं(l.2)············[सू]र्यस्याश्वानां यूथमिव······वेगवत् . अनन्तं बहु . पृथ्वीराजो हि सूर्य(l.3)··· 11.

[अतिभरसहनप्रवृद्ध]कीर्ति-
द्विपमिव शेषमहीशमेव मत्वा .
अहिकवलनकेलि(l.4)[कोविदं त-
त्करभकुलं हयसं?]यमन्वयासीत् ॥

राज्ञोतिभरसहनेन प्रवृद्धां कीर्तिं द्विपन्तं शेषं(l.5)············ [मा]सोयतमुग्रकुलमश्वसेनामन्वगच्छत् ॥ 12.

1 Ms. ए°. 2 Ms. श्म°.

गलितमयुगपद्यु(1.6)गत्रयेण
क्षितिपतिना युगपत्कृतं नवीनम् .
गिरिशवृषपदत्रयं विदित्वा
धवलवलं वलव(1.7)द्वले ववल्ग ॥

अयुगपत्क्रमेण युगत्रये गिरिशवृषस्य धर्मस्य पादत्रयं गलितं सद्रा-
ज्ञा(1.8) नवीनं कृतं ज्ञात्वेव धवलवलं वृषयूथं कटकेवल्गत् ॥ 13.

नरपतिदयितेति माननीयां
क्षि(1.9)तिमिव पादयुगेन न स्पृशन्ती .
चतुरचरणचारचारुरासी-
द्गगन इवात्र पदा पदातिसेना ॥(1.10)

भूमिपतेर्भूमिः प्रियेत्यतो मान्यां भूमिं मत्वेव पदाभ्यामस्पृशन्ती[1]
पत्तिसेनाकाशे न्यस्तपदेवासीत्(1.11) चतुरो यश्चरणयोश्चारः क्रमविशेषस्त-
या चारुः ॥ 14.

नृपतिरखिलकृष्णपक्षरक्षा-
मणिरिति क(1.12)र्णजुपेव किंवदन्त्या .
उपसमृपुरतीतभाविराका-
रमणगणास्सुसितातपत्रभङ्ग्या ॥

अ(1.13)यमखिलानां सर्वेषां कृष्णात्पापाद्बहुलाच्च पक्षाद्रक्षार्थं मणिरिति
श्रुतया वार्तयेव भूतां(1.14) भविष्यन्तश्च पूर्णचन्द्राश्छत्रच्छलादागताः ॥ 15.

प्रहितमुदधिसप्तकेन सर्वं
सकलघनेभ्य इ(1.15)वेन्द्रचापचक्रम् .
दिशि दिशि शिखिपिच्छनिर्मिताना-
मघटत मण्डलमुष्णवारणानाम् ॥(1.16)

---

1 Read 'षस्त्रेन. 2 Ms. 'तथ'.

सप्तभिस्समुद्रैस्समस्तमेघेभ्यो विसृष्टमिन्द्रधनुश्चक्रमिव मयूरपक्षकल्पि-
ताना छत्राणा(1 17) मण्डल दिशि दिश्यमिलत् ॥ 16

असितधवलधूयमानवाल-
व्यजनसहस्रसहायदिग्वि(1 18)भागा .
चकितकलितमोनुलग्नवल्ग-
त्कृतयुगचन्द्रकरेव भूर्बभूव ॥

कृष्णाना श्वेताना च चम(1 19)राणा सहस्राणि सहाया येषा ते दि-
गन्ता यस्या सा भू राजभयाच्चकितो य कलिस्स एव तम(1 20)स्तस्यानुल-
ग्ना कृतयुगस्य चन्द्रस्येव करा किरणाश्च यस्या सा भूरभूत् ॥ 17.

हृदि हृदि रिपुयोषि(1 21)ता निधातु
विभजनपूर्वमिवोपतापनाय .
ध्वजपटपटलानि पाटनाय
प्रवहतिरे प्रच(1 22)[तान्ति] सूर्यधाम्नः ॥

चलन्तो ध्वजास्सूर्यतेजोदलनाय प्रवृत्ता अतस्सभाव्यते शत्रुस्त्रीणा
प्रतिचि(1 23) सतापनार्थम् रवितेजो निधातुमिव ॥ 18.

अविरलरथचक्रचक्रधारा-
खनननिभेन पृथक्पृथक् पृथिव्याः .(1 24)
[अपरनृपनिखाततापशल्यो-
द्धरणमिवाशयतो विधीयते स्म ॥

रथचक्राण्येव चक्रधारास्ताभिर(1 25**68)विरल कृत्वा खननस्य व्या-
जाद्राज्ञान्यरा[ज]कृतस्य सन्तापशल्यस्योद्धर (1 1)स्य 19

1 Ms शह्रि° 2 Ms ति 3 Ms °र्वो° 4 Ms ते ३४
5 Ms lc at the bottom of page 6 See p 39, note 4 p 204 note 2
7 Ms स्यर 8 Ms यत

[चरणविपाट्यमानधात्री-
तलतलिनोच्चरिताहिवाहिवक्रम् .
[करभकुलमुवाह तत्पताका-
प](1 2)टमिव तुल्यगुणं विरूपतायाः ॥

चक्रपाटितभूतलात्तुलिनं तनु············(1 3)यस्य तत्करभकुलं कर्तृ पताकापटमिवावहत् उष्ट्रैर्ग्रस्यमानेषु············(1.4)गुणं कुतो विरूपत्वात्. यद्वा भूतलस्य तलिनं तनुप्रदेशः ॥ 20.

पटं⏑⏑⏑⏑–⏑–⏑–
[रिपु](1.5)बलनिर्दलनाय कालदूतान् .
प्रतिनिनदनिभादुपागताः स्वो
द्रुतमिव⏑⏑–⏑–⏑–– ॥

[दु](1 6)न्दुभिश्शत्रुमारणार्थं यमकिङ्करानिवाह्वयत् वयमागतास्स्म इतीव भू············॥(1 7) 21.

कटकभरनिपीड्यमानधात्री-
नमनमितोन्नमितो महीध्रवर्गः .
उपजिग[मिपु]–⏑⏑⏑––(1 8)
चलितुमिवारभताक्षमो ग्रहीतुम् ॥

सैन्यभरेण निपीड्यमानधा[त्री]············(1 9)किंचिदिवोन्नमितः भूमिनमने पर्वतानामौन्नत्यसंभावनात् शत्रूनागच्छ············(1.10)कः पर्वतवर्गो भयवशाच्चलितुमिवारब्धवान् ॥ 22.

करभरभसभीरुभिर्भुजङ्गै-
स्त्व[रितमवेशि यदा](1.11) तलं रसायाः .

---

1 Ms. °यं°. 2 Ms °श्र°. 3 Sic. Is it °तलातुलित? The text would then be °तलतुलितोच्चरि°. 4 Is it पटद्विरव श्राजुहाव भूयो? 5 Ms. °द्येम°. 6 Ms. द्रुरू.

अतिभरविवशस्य भोगिभर्तु-
स्तदिव सहायदशां प्रयातुमीपुः ॥

करभेभ्यो रभस(l.12)भीतैस्सर्पैः पाताले द्रुतं यत्प्रविष्टं तत्प्रवेशवशैः(?) संभ्रांतस्य शेषस्य साहायकं कर्तुं सर्पो(l.13) अकार्पन्निव(?) ॥ 23.

पटहविरटितानुवादविद्या-
पतिभिरकारि निवेदनं दिगन्तैः .
घुसरिति जलके(l.14)लिनिर्वृतानां
दलति भरेण धरेति दिग्गजानाम् ॥

पटहानां विरटितस्य ध्वनेरनुवादे(l.15) प्रतिशब्दे विद्यापतिभिर्विदग्धैर्दिगन्तैर्गङ्गाजलक्रीडाप्रवृत्तानां दिग्हस्तीनां भरेण भूस्स्फुटतीव(l.16)··· ·········· ॥ 24.

⏑ ⏑ कमदलयन्दमाय(?)मस्मि-
न्सति नृपतौ तव वक्रता न योग्या .
निगदितुमि(l.17)⏑ — ⏑ — ⏑ — —
⏑ ⏑ ⏑ ⏑ — ⏑ ⏑ — ⏑ — ⏑ — ॥

············विपर············(l.18) 25.

[Lines 19 to end of page missing] (*)

············मुखसहस्रेण शेपे············ति गृहीतमूर्तिसहस्रो चलवद······(l.1)·········कृतां भूमिमवहत् . नामी शेषनिश्वासाः किं ह्यर्हि भूमिधारणार्थं कु(l.2)············ ॥ 26.

तुरगखुरपरम्परापरागैः
प्रथमतरं गतमस्तमन्तरिक्षम् .
पुन(l.3)⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — —
[क्व]चिदपि मातुमिभैरशक्नुवद्भिः ॥

---

1 Ms. नभसेन crossed before 'भी'. 2 Ms. 'मीडा' i.e. under l. 15.
3 Is it 'रिव निरमायि देहकान्त्या ?

अश्वखुररजोभिराकाशं विनाशं(l.4)············नैर्हस्तिभिस्स्वशरीरश्रिया पुनरिव निर्मितम् ॥ 27.

प्रतिपदमघटन्त वै(l 5)[जयन्ती-
भुज ⏑ ⏑ – दभिभूत?]वैजयन्त्याः.
दशमुखहृतपूर्वराजराज-
प्रमुखविमानमदच्छिदो नि(l 6)[वेशाः] ॥

············[म]एडपा मार्गे मार्गे संपन्नाः वैजयन्त्यः पताकास्ता एव भुजास्तैर्हेतुभिरभि(l7)············[जि]तरशक्रप्रासादो यैस्ते तथा दशमुखेन हृतपूर्वाणि यानि राजराज···(l 8)···;·········विमानानि तेषां मदच्छिदः पुष्पकादिविमानसदृशा इत्यर्थः ॥ 28.

तिसृभि(l 9)[रनुसृतेव शक्तिभिस्तं]
प्रणयपरा परिरभ्य राजलक्ष्मीः.
अविरतकरिकर्णनालवात्या-
जडिमभयं(l 10) ⏑ ⏑ – ⏑ [मुञ्चति स्म?] ॥

तिसृभिश्शक्तिभिरनुसृता सहितेतीव तं प्रणयेनालिंग्य राज्यश्रीरविरतं(l.11)············यो[1] जडिमा ततो भयमत्यजत् तिसृणां मध्यात्काचिदेनं मा स्म रुञ्ज(l 12)············गातुं. परिरम्भेण च जाड्यभयं शाम्यति ॥ 29.

प्रतिपथमिलितानुलग्नतत्त(l.13)-
त्पु[रदयिता]हृदयोपदिष्टरंहाः.
गुडपुरमथ वेष्टयांचकार
क्षितिपतिरुद्धतयुद्धतत्वदर्शी ॥(l 14)

अर्थाद्दृष्टुमागतानां प्रतिपथं मिलितानामनुलग्नानां तासां तासां पुर-

1 Ms. 'जस्ते'. 2 Ms या. 3 Ms. 'दृ'.

स्त्रीणां हृदयैरिवोम(1.15)दिष्टं रंहो यस्य स मनोवच्छीघ्रगामीत्यर्थः तथो-
द्धतेषु युद्धतत्वस्य दर्शको राजा गुडपुरम(1.16)वेष्टयत् ॥ 30.

दलयितुमयतन्त दुर्गभाजा-
मथ हृदयं नृपसैन्यसिंहनादाः ।
असमसमरस(1.17)त्रनिर्विविक्त-
त्पितृपतिमङ्गलसूक्तपाठकल्पाः ॥

दुर्गप्रविष्टानां मनो दलितुं राजकटकसिं(1.18)हनादाः प्रवृत्ताः अस-
मो यस्समरस्स एव सत्रमनवरतान्नदानस्थानं तत्र निर्विविक्तन्प्रवेष्टुका-
मः(1.19) यः पितृपतिर्यमस्तस्य मङ्गलसूक्तपाठसदृशाः । सत्रे च भोक्तुकामो
ब्राह्मणस्सूक्तानि पठति ॥(1.20) 31.

अवनिपतिभयादुपेत्य पार्श्वे
सह चलता कलिनेव दत्तशिक्षः ।
दयितमपि विमुच्य वीरधर्म(1.21)
क्वचिदपि विग्रहराजभूरयासीत् ॥

सह चरता सहचरेण कलियुगेन राजभयान्निकटमे(1.22)[त्य दत्तो]-
पदेश इव विग्रहराजपुत्रोभीष्टमपि वीरधर्मं त्यक्त्वा क्वापि पलायितः ॥ 32.

समर ⏑ (1.23) ⏑ ⏑ – ⏑ – ⏑ ––
समरसहेषु वहुष्वपि स्थितेषु ।
स मरणमपवादसंज्ञमाप्तुं
समरस[योर्भयलज्जयोर्ममज्ज?] ॥(1.24)

............हेषु वीरेषु वहुष्वपि स्थितेषु स राजा पुत्रसंग्रामार्थं न
प्रवृ......(1.25--69)........[श्रय]शोनामकं मरणं लब्धुं तुल्ययोर्भय-
[ल]ज्जयोर्मग्नः । अन्योपि कि............ 33.

---

1 Ms. °तन्तु 2 Ms. °रूपः. 3 Ms. मङ्ग.° 4 Ms. °धानु°. 5 Ms. °ξ° written above °स°. Comm. °चर°. 6 Sic. Is it राजा पत्स° or राजपुत्रस्स°?

⏑⏑⏑⏑(11)मपदे विमुक्तसत्वं
⏑⏑⏑रजोपि तमोदशां मपन्नं .
तदपि समरसाक्षि[णोप्यहृप्यन्
⏑⏑⏑⏑देवभटा?](12)दयः मवीराः ॥

राज्ञा भीतानां मारणाभावादपदे अस्थाने भ्रष्टसत्वं तं तमोदशां प्राप्तवद्रजो य······(13)दयस्तद्देवभटादयः संवव्रुः . देवभटादिभिस्तत्सत्वभ्रंशो गोपित इत्यर्थः. रजस्तमसी गुणौ -          34.

[प](14)रिवृढरहितशिरोविहीनो
भवति पुमानिति यः पृथुप्रवादः .
अहितभुजभृतां⏑‒⏑‒
[त](15)मगमयच्चरितार्थतां नरेन्द्रः ॥

अस्वामिको लोकशिरोरहितो भवतीति यो महाञ्जनप्र[वादस्तं श]-(16)त्रुभटानां शिरांसि छित्वा सत्यार्थत्वमनयत् . विग्रहराजपुत्रे चलिते शत्रूनवधीदित्यर्थः ॥          35.

[भुवि पति](17)तवतां स्वयोधमूर्ध्ना-
मनुसरणार्थमिवावनम्रमुख्या .
सममहितमहीपतेर्जनन्या
सुभटघटाः मभु[रानि](18)नाय वध्वा ॥

छेदेन भुवि पतितानां निजभटशिरसामनुगमनार्थमिवा[न]तमुख्या शत्रुराजमात्रा सह वध्वा(19) राजा सुभटपंक्तीनानयत् ॥          36.

असुररुधिरसिन्धुतीर्थिकानां
नर[रुधिराच]मनं ग्रपेपपानं -

1 Ms. 'दे.'   2 Ms. 'ददर्शत.'   3 Ms. 'ते.'   4 Is it 'परिनर्दत्तया' ...र्दत्वा?   5 Ms. 'पं.'   6 Ms. 'त्न'.   7 Sic. Read 'दीप.'

इति नृ(1.10)पतिशरा इवं त्रपातो
झगिति निपङ्गनिपङ्गितामगच्छन् ॥

पृथ्वीराजेनासुरसमाश्शत्रवो नित्यं ······ (1.11) अतोसुररक्ताब्धौ तीर्थिकानां तद्बाणानां नररुधिरेणाचमनमपेयस्य पानमयुक्तं भवतीतीव लज्जातो राज(1.12)शरास्तूणे तूर्णं प्रवेशमगच्छन् ॥ 37.

अथ विजयिनि राजनि प्रविष्टे
क्षणमपि निर्गमनं श्रियोतिभीमा .
अरु[ण](1.13)दजयमेरुगोपुरस्य
प्रतिभटमूर्धभिरेव तोरणस्रक् ॥

ततः प्राप्तजये राज्ञि पुरं प्रविष्टे सति शत्रु[मस्तक](1.14)कृता अजयमेरुदुर्गस्य तोरणस्रगेवातिभीमत्वान्निर्गमनं श्रियोरुधत्. श्रीस्तत्रैव स्थिराभूदित्यर्थः ॥(1.15) 38.

मरुदिव दिशि पश्चिमोत्तराया-
मतिवलवानधिपस्समस्त एव .
तदुपरि परमार्थपौरुष[द्धर्या हय](1.16)-
पतिरेव तिरस्करोति सर्वान् ॥

यथा वायुस्तथा पश्चिमोत्तरायां वायव्यविदिशि सर्व एव प्रभुरति[वल](1.17)वान्भवति तदुपरि हयपतिरेव सहजविक्रमसमृद्धस्सन्सर्वानभिभवति ॥ 39.

तमपि पुपितग[जना](1.18)धिकारं
विरसलघुं शरदभ्रवद्व्यधाद्यः .
कदशनकुशलो गवामरित्वा-
त्समुदितगोरिपदापदेश[मुद्रः](1.19). 40.

---

1 Ms. 'तिथि.' 2 Ms. 'वाप्र.' 3 Ms 'च्छन. 4 Ms. 'जाय'.
5 Ms. 'मोत्तरायोसति'. 6 Ms. 'मोत्तराय. 7 Ms. 'गौरि'-

नृपचरणनिपातपातकित्व-
प्रकरणसामयिकः कलेर्युगस्य .
स किल सकलराजमण्ड[लश्री](1.20)-
व्यवधिविधानविधुन्तुदत्वमच्छत् ॥

गर्जनाख्यो देशविशेषो गर्जनं गर्जितं च तत्र सुधिनो[ऽ]विचार[ित्तम्य श्री]
(1.21)यश्शारदभ्रमिव विरसं हतभूमिकं निर्जलं चानो लतुमनादग्र्यं [ई]
लातुल············(1.23)गोघ्नत्वात्कुत्सितभोजनकार्यं तथा मनुष्यं [प्र]
य स्थिते गोरिरिति व्यपदेशो मुद्रा [यस्य]···(1.23*)··········[ग]
दच्छेदेन पातकित्व·········णप्रकर्षणक्रिया तत्र च·····(1.)······
···[चन्]द्रो नृपाश्च राजानस्समस्तराजमण्डलशोभा[...]
············(1.2)··· ·········छादयति ॥

किमपरमपरीक्ष्य दीक्षितत्वं
क्षपणविधौ नरराक्षसां स पापः (.)
[व्यस]जदजयमेरुमेरुभूभृ-

राजद्वास्स्थवर्गस्तमापतन्तं सन्तं कथमपि निषिषेधेति संबंधः(l 8). स्खलितिदशां लुञ्चनं प्रापितं शिरः कर्मभूतं दधानम् अतस्संभाव्यते निरवधीनामसंख्यानां कपिला(l 9)नां गोविशेषाणां वधो मारणं तत्प्रशस्ति लेखितुमिव वेधसैव विस्तीर्णललाटपट्टं सृष्टम् . लि(l.10)खितुमिति चिन्त्यम् ॥ 43.

परिहृतकचकूर्चपक्ष्मरोम-
व्रजमिव कालिकयाप्यवद्यभीत्या .
स्वपदसु(l.11)लभगोस्तनीगुलुच्छ-
प्रतिफलितामिव बभ्रुतां वहन्तम् ॥

स्वपदे गर्जनदेशे सुलभा या गोस्त(l 12)नी द्राक्षा तद्गुलुच्छेभ्यस्संक्रान्तामिव कपिलवर्णतां दधानं अतस्संभाव्यते पापभयात्कालत्वेना(l 13)पि त्यक्तकेशादिकम् ॥ 44.

दधतमपुनरुद्गमाय लूनै-
स्सह चिकुरैरिव लुप्तमूर्धवर्णाम् .
विपिन(l.14)विहगवाशितायमानां
तनुमिव धिग्गिरमप्यशुद्धवर्णाम् ॥

धिङ्निन्दायाम् . वनपक्षिरुतसमां(l.15) गिरं दधतम् लुप्ता मूर्धवर्णा ऋटवर्गरपा यस्यास्ताम् तनुमिव . तत्पक्षे मूर्धवर्णः कालत्वं अशुद्धो(l.16) [व]र्णो जनङ्गमत्वं यस्याम् ॥ 45.

हृतामिव हिमलरशुचित्ववर्णे
जननभुवः ककुभो हिमाद्रिमत्याः .
सि(l 17)[च]यमनुचितं विपाण्डिमानं
वपुषि वहन्तमवद्यरोगकल्पम् ॥

1 Ms. °पेषित° 2 The verse referred to by this part of the Comm is lost. 3 Ms. °वर्ण° 4 Ms °सान्ना°

सिचयानां वाससामुचितं पा(1 18)[ण्डुर]त्वं शरीरे धारयन्तं. पांडुवर्ण-मित्यर्थः. अवद्यो गर्ह्यो रोगश्श्वित्रादिः तत्समम् अतस्संभाव्यते शु(1 19)-[चि]त्वं शुद्धिश्शुभ्रत्वं च तद्वर्णं यत्रैवं कृत्वोत्तरदिशो जन्मभूमेर्हिमादिवा-हृतम् ॥ 46.

फलयति कथ(1 20)[मा]ह्रिकस्य शोभा-
मशुचिनि जन्मनि वाससोपि शुद्धिः.
इति वृजिनमिवेत्यं कञ्चुकित्वं
कृतपरिरंभ(1 21)⏑—⏑[मुद्वहन्त]म् ॥

अशुचिनि जन्मनि चाण्डालत्वे मलिने च जन्मनि सत्याह्निकस्य शरीरस्थस्य(1 22)··········[विहि]तालिङ्गनं वृजिनं पापं कर्मभूतमुद्वहन्तम् ॥(1 23**70)* 47.

* * * * * * * * * * * *

न्धिस्थानेषु मग्नास्सर्वे······यस्य भाजनं दृष्ट्वा राज्ञां पङ्क्ति········ ···(1,1)न केवलं जनानामङ्गान्य···मग्नानि यावद्राजाङ्गान्यपि दुर्गाङ्के मग्नानीत्यर्थः. भयात्सर्वे दुर्गं प्रविष्टा [इ](1.2)ति तात्पर्यम् ॥ 48.

आपादोपवशाद्गिरां बलरजस्तोमैर्दिशामम्भसा-
मह्णां भानुरुचां च दुष्कृतभरा[द्व्या](1 3)वापृथिव्योरपि.
काठिन्यात्कुलिशस्य मारकफलासङ्गाद्विपूणां यथा-
द्धेनूनां [च] धरण्यरोधि दशधा [तथ्या](1 4)भिर्धगोरिभिः ॥

दशधा गोरिभिर्गवार्गोरिभिर्वधकैर्धरणी गौरवरोधि विप्लुता. तानेव दशप्रकार[न्भा](1 5)पादोपेत्यादिनाह. आपादोपवशाद्गिरां रोधः. बलरेणुनिकरैर्दिशां गवां रोधः. तथाम्भसां गवां तै[रे](1 6)व रोधः. तथाह्णां गवां

1 Ms पडु°. 2 Ms °ह्रिक°. 3 Ms °[illegible]°. 4 Ms. °न्तम्°. 5 Ms °केच. 6 Copyist's remark [illegible]. 7 Ms. °गो°. 8 Ms गो°.

तैरेव रोधः. पापभराद्द्यावापृथिव्योर्गवोर्बाधा. कुलिशस्य गोः कोठिम्याजर्यः. (1.7)शराणां मारफलकफले लोहमये मुखे आसक्ताद्धेनूनां गवां वधात्. तथा च कोशः.

वाग्भूदिग्रश्मि(1.8)वज्रेषु पश्वक्षिस्वर्गवारिषु
गोशब्दस्य स्मरणादृशधा वध्याभिधैस्सत्यार्थनामभिः ॥ 49.

कारागाराधिका(1.9)राहितरणरणकैः प्रेतनाथस्य याव-
त्तैर्दुर्गे गूर्जराणां नृतनुभिरसुरैर्नड्वलाख्ये निमग्नम्.
पृथ्वीराज(1.10)स्य तावन्निखिलदिगभयारम्भसंरम्भसीमा-
भीमा भ्रूभङ्गभङ्गी विरचनसमयं कार्मुकस्याचचक्षे ॥(1.11)

कारागारे बन्धनस्थानेधिकाराय प्रेतनाथस्य जनितं रणरणकं चिन्ता यैः. पूर्वं यमकारागारस्य शून्यत्वा(1.12)च्चिन्ता नाभूत् तदा तु यमेन कारागारं प्रवेशिताः अतो यमस्य प्रत्यवेक्षाचिन्ता जातेत्यर्थः. तैर्मनुष्यरू(1.13)-पैरसुरैर्नड्डुलनाम्नि दुर्गे यावन्निमग्नं तावद्दिशामभयदानस्य सीमावधिः भ्रुकुटिर्धनुषो न(1.14)मनमाख्यत्. राज्ञा यदा भ्रुकुटिः कृता तदा भटैर्धनुर्नमितमित्यर्थः ॥ 50.

भ्रुकुटिकुटिलः पृथ्वीभर्तुर्गद(1.15)नवनेरिशवं
मिलदरुणिमा भाले कोपि व्यभाव्यत कालिमा.
जलधर इवाकस्मादेरम्मदेन संहाचि(1.16)पा
चिकुरसरणिं प्राप्तः कर्तुं प्रतापहृतिं द्विषाम् ॥

राज्ञो भ्रुकुटिरूपः कुटिलश्च तथा मिलन्न(1.17)रुणिमा कोपरागो यस्य स कालिमा कार्ष्ण्यं ललाटे जनने(!) व्यभाव्यत दृष्टः शत्रूणां प्रतापं हन्तुं वैद्यु(1.18)तेनाग्निना सह केशसीमां प्राप्तो मेघ इव. नेयं भ्रुकुटिः किन्तु मेघः न चायं कोपरागः कि(1.19)न्तु विद्युदग्निः. विद्युत्सहितो मेघश्शत्रूणां प्रतापाग्निं शमयितुं संप्राप्त इति सम्भावनमिति भ(1.20)द्रम् ॥ 51.

---

1 Ms. °यगोत्का°. 2 Ms. °य 3 Sic. Is it °रफलके? Is the text °मारफलका°?. 4 Ms. त्रिष्या°. 5 Ms. °वेंगूं°. 6 Ms. नभू°. 7 Ms. °रे°. 8 Ms. महा°. 9 Ms. वैरिणा crossed before के°.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ(1 21) विश्रम्य रम्यश्रियि ।
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शास्त्रोदजरोदमेदु(1 22)रमतिर्ज्योत्स्नाकरो लावणिः ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स [जो](1 23)नराजः ।
सर्गं चकार दशमं सुरमत्र पृथ्वी-
राजाख्यराजविजयाभिधकाव्यराजे ॥(1.24)

पृथ्वीराजविजयविवरणे श्रीजोनराजकृते दशमस्सर्गः

1 Ms. °[illegible]°. 2 Ms. °[illegible]°. 3 Ms. °[illegible]°. 4 Ms. [illegible](1.20).

# [ एकादशः सर्गः ]

———⌣——————⌣ तेजसा ।
तेजोन्तरतिरोधानं व्यानञ्ज नृपतेर्मुखम् ॥

अ.............(1.1).............स्पृष्टं राज्ञो मुखं तेजोन्तराणामन्येषां तेजसामन्तर्धानमकरोत् ॥ 1.

दर्पणेष्विव सं(1.2)क्रान्तं मुखेषु भुजशालिनाम् ।
सहस्रमुखतां प्राप तस्य शूरस्य तन्महः ॥

आदर्शेष्विव वीराणां मुखे(1.3)षु संक्रान्तं तस्य शूरस्य रवेश्च तेजस्सहस्रप्रकारतां प्रापत् ॥ 2.

ततः कदम्बवासेन धैर्यावासेन मन्त्रिणा ।
वि(1.4)ज्ञप्तस्सत्यदासेन सभाव्यासेन पार्थिवः ॥

धैर्यावासत्वादिगुणविशिष्टेन कदम्बवासाख्येन मन्त्रिणा(1.5) राजा विज्ञप्तः ॥ 3.

राजन्नवसरो नायं रुषां भाग्यनिधेस्तव ।
किं क्रमेलकभक्ष्येषु तार्क्ष्यः फणिषु कुप्यति ॥(1.6)

भ......वतो नायं रोषकालः उष्ट्रैर्भोक्तुं शक्येषु सर्पेषु गरुडः किं पराक्रमते ॥ 4.

तिलोत्तमामिवोद्दि(1.7)श्य रसामतिमनोरमाम् ।
सुन्दोपसुन्दभङ्ग्या ते स्वयं नंक्ष्यन्ति शत्रवः ॥

---

1 Ms. 'नव्या'. 2 Ms. 'शिषु. 3 Ms. गरुडः written above क्रमेलक.(!)

यथा तिलोत्तमामुद्दिश्य(1.8) सुन्दोपसुन्दौ नष्टौ तथा तव मनोज्ञां लक्ष्मीमुद्दिश्य शत्रवस्स्वयं नाशमेष्यन्ति ॥ 5.

इति तस्मिन्वदत्येव(1.9) महीनं विनयानतः ।
तेजसेव भ्रमदृष्टिः प्रतीहारो व्यजिज्ञपत् ॥

एवं तस्मिन्कथयत्येवं वि(1.10)नयेन नतोवस्तेजसेव सम्भ्रान्तदृष्टिः प्रतीहारो विज्ञप्तवान् ॥ 6.

हृद्यमान्तमिवानन्दं विकस्वरमुखो(1.11) वमन् ।
लेखहस्तः पुमान्प्राप्तो देव गूर्जरमण्डलात् ॥ 7.

आकर्ण्येति प्रतीहारभारतीं भारतेश्वरः ।(1.12)
तूर्णं प्रवेशयेत्यूचे स च दूतमवीविशत् ॥

एवं प्रतीहारविज्ञप्तिं श्रुत्वा त्वमेनं प्रवेशयेति(1.13) राजा तमेवं भणितवान् प्रतीहारश्च दूतं प्रवेशितवान् ॥ 8.

मुखे प्रसादसंवादसंमतैस्स मितैः(1.14) पदैः ।
गूर्जरोपज्ञमाचख्यौ घोरं गोरिपराभवम् ॥

मुखे प्रसादस्य संवादेन प्रियैरल्पैः पदैः(1.15) स दूतो गूर्जराणामुपज्ञायज्ञानं. प्रथमं गूर्जरैरेव कृतमित्यर्थः. गोरीणां म्लेच्छानां पराभवं कथि(1.16)तवान्. उपज्ञोपक्रमंमिति नपुंसकम् । उपज्ञा ज्ञानमाद्यं स्यादित्यमरः ॥ 9.

उच्चैःश्रवस्स्वसा(1.17) लक्ष्मीरमुनैव कलङ्किता ।
इति क्रोधेन निश्शेषैः परित्यक्तं तुरङ्गमैः ॥

उच्चैःश्रवसस्सोदरी श्रीर(1.18)·········दूषितेतीव रुषा सर्वैरश्वैस्त्यक्तम् ॥ 10.

---

1 Ms. °गत.. 2 Ms. °लेव. 3 No Comm. 4 Ms. °(ति.
5 Ms. °पे गो°. 6 Pāṇini 2. 4. 21. 7 Amara 2. 692

द्विजराजो मम भ्राता द्विजराजाश्रयः पतिः .
कथं(1.19) [मातङ्ग]सङ्गो मे न्याय्य इत्युज्झितं श्रिया ॥

द्विजराजश्चन्द्रो ब्राह्मणश्च मम भ्राता भवति द्विजराजो गरुडस्तदा-(1.20)············तो मम मातङ्गैर्म्लेच्छैश्चाण्डालैश्च सङ्गः कथमुचित इति लक्ष्म्या त्यक्तम् ॥ 11.

अपवि(1.21)[त्रम]खन्द्रष्टुमसमर्थैरिवासुभिः .
पृष्ठव्रणमुखेनैव त्यक्तनिश्शेषसैनिकं ॥

अशुचित्वान्मुं(1.22**7)खं द्रष्टुमशक्तैरिव······पृष्ठव्रणमार्गेणैवो-ज्झितसमं[स्त]············(1.1)इत्यर्थः ॥ 12.

निशम्य दुर्यशोमात्रसैन्यं हयपतिं गतम् .
विज्ञापयितुमारेभे पार्थिवं [पृथिवीभटः] ॥(1.2)

अपयशोमात्रमेव सैन्यं यस्य तं हयपतिं गतं श्रुत्वा पृथिवीभटो रा-जानं विज्ञप्तवान् ॥ 13.

———⏑(1.3)मासाद्य स्वामिन्मा स्मावमन्यथाः .
भाव्यर्थदर्शिनात्मानं धन्यं मन्यस्व मन्त्रिणा ॥

हे स्वामि·········(1.4)त्वं मावमंस्थाः भविष्यन्तमर्थं जानता कद-म्बवासेन मन्त्रिणा करणभूतेन त्वमात्मानं धन्यं मन्यस्व ॥ 14.

[तिलोत्तमे](1.5)व हि रमा रज्यन्ती त्वयि गोपतौ .
स्वयं जगाम लोभान्धगोरिक्षयनिमित्तताम् ॥

गोर्भूमेस्स्वर्गस्य·········[त्व](1.6)यि सानुरागा लक्ष्मीस्तिलोत्तमा यथा लोभान्धानां गोरीणां म्लेच्छानां क्षयकारित्वं गता ॥ 15.

---

1 Ms. ब्राह्मणश्च lc. under 1. 20. 2 Ms द्विग°. 3 Ms. सम. 4 Ms. °ष्टुमसम°. 5 Ms °वासु°. 6 Ms. °ष्ट°. 7 Ms. °नेत्र. 8 Ms °त्वा-मुन्दुख°. 9 Ms. has ? on margin. 10 Ms. °मस°. 11 Ms. °ना°. 12 Ms. °न्यार्थदर्शि°. 13 Ms. भन. 14 Ms. रसा.

इ———(१७)———मन्तहरिरभ्यधात्.
उपमानं श्रियः केयमिति प्रासङ्गि——— ॥

............क्यान्त......(१८)वदत् केयं लक्ष्म्या उपमानं उक्तेति शेषः ॥ 16.

इतिहासशताभ्यासव्यासः क्ष्मावास[सन्निधौ](१९).
इतिहासशुचिं वन्दी भूयोऽप्युदहरद्गिरम् ॥

पुरावृत्तज्ञाने व्यासो वन्दी राजान्तिके एव.........(११०)तां वाचं पुनरभ्यधात् ॥ 17.

तिलोत्तमेति ललिता काप्येषा चतुरक्षरी.
देव व्यस्तसमस्तत्वात्प[ञ्चेषोः] (१११)पंचसायकी ॥

तिलोत्तमेत्यक्षरचतुष्टयं पञ्चबाणस्य पञ्चशरा भवन्ति व्यस्तसम-
............(११२)गुणस्य उकारस्य विश्लेषेण पञ्चाक्षरतोदयात् ॥ 18.

रूपस्योत्तममुष्टित्य रम्भादि——लंति[1].(११३)
परीक्षापूर्वकारी यां ससर्ज चतुराननः ॥ 19.

भवद्रुमफलं मत्वा यन्मुख————.(११४)
मिथस्सुन्दोपसुन्दाभ्यां युद्धा चक्रे पदं दिवि ॥

यन्मुखदर्शनमेव जन्मवृक्षस्य............(११५)सुन्दाभ्यां स्वर्गे युद्धा स्थितिः कृता ॥ 20.

आनन्दसम्पदो या गात्तन्मुखस्या[र्ध]भागिताम्.
[इतीव?]———(११६)व्याधिमन्दमिन्दुं व्यधाद्विधिः ॥

तस्य मुखस्य संबन्धिन्या हर्षाधिकार्धभागी चन्द्रो मा......(११७)-
राजयक्ष्मणा हतं चन्द्रं विधिः कृतवान् ॥ 21.

---

1 Is it 'रिरंसन्ति'? 2 No. Comm. 3 Ms. 'ल'. 4 Ms. 'व' crossed after 'र्ध'.

रूपमायत्ततां यातं तथास्यास्सुरयोपितः[1] ।
[अनुरक्त?](l 18)मिवोपास्ते चित्रस्थामपि तां यथा ॥

रूपं······विधेयं तथाभूयदनुरागादिव रूप······[लि](l 19)खितामपि तां सेवते ॥ 22.

तथा च पूर्वचारित्रं त्वदीयं यत्र चित्रितम् ।
देव तत्रेयमभ्ये[ति पश्य धा](l 20)त्रीसुतामपि ॥

तथा हि त्वदीयं पूर्वजन्मचरितं यत्र यत्र लिखितमस्ति त······
······[सीं](l 21)तामप्यभ्येत्यनुकरोति ॥ 23.

इति पृथ्वीभटेनोक्ते दूतं संतोष्य पार्थिवः ।
विसृज्य म[न्त्रिणः सर्वानवि](l.22)शच्चित्रमण्डपम् ।
वन्दिनेत्युक्ते दूतं प्रतिमुच्यामात्यान्विसृज्य स चित्रस्थानम······
(l.23*) 24.

———◡———————◡—◡— ।
———◡—————जो न्यजिज्ञपत् ॥

समस्तानां रा············(l.1)···तयाङ्गुल्या चित्रं दर्शय······
···[विज्ञ]प्तवान् ॥ 25.

लूनैरत्र दशाननस्य भगवान(l 2)[ष्टाभिराद्यै?]र्मुखै-
र्मन्ये मानवदेव शस्तुरकरोदष्टावधीनास्तनूः[2] ।
कृत्तं यद्वदनं त्वनेन नवमं भायच्छिदस्मात्फ(l 3)[लं][3]
[त्वत्तो मृत्यु]मतोधिकं त्वसुलभं मत्वाप्यरौत्सीत्करम् ॥

हे मानवानां देव कृत्तैरष्टाभिर्मुखैर्हेतुभिर(l 4)[ष्टौ पृथि]व्यादीस्तनूर्मूर्ती रावणस्यायत्ताः[4] कृतवान् ततो रावणेन नवमं मुखं यल्लूनं फलं त्वत्कृतं मरण(l 5)[मदात्] ततो दशमशिरश्छेदारम्भे हरोस्य करं रुद्धवान्

1 Ms °स्सरयाषित 2 Ms °तम°. 3 Ms °ने° 4 Ms. °चे°.
5 Ms. °नून्°. 6 Add तस्य. 7 Ms. °रच्छे°.

अहं मन्ये त्वत्कृतमरणादधि(! 6)[कं]······मया. अयमर्थः. अष्टशिर-स्च्छेदफलात्रिजाष्टमूर्तिषु प्रभुत्वदानादधिकं नवमेशिर(! 7)[स्च्छेद]फलं नारायणहस्तेन मरणं रावणस्य मया दत्तम्. दशमं शिरोसौ यदि मद्भक्त्या [लुनाति](! 8) तदा किमतोधिकं फलं ददामीति दशमं शिरश्छिकर्तिषो रावणस्य महेश्वरो हस्तं रुद्ध्वा(!.9)[नि]ति संभावनम् ॥  26.

> पयोधेरुत्पन्नान्करितुरगधन्वन्तरितरू-
> न्दविष्ठीभूतायां जननभुवि खिन्ना(! 10)[निव] विदन्.
> इमानेतां लङ्कां यदपि दशकण्ठो यदनय-
> स्वदध्येते सीदन्त्यपहृतिकुकीर्तेरसह(! 11)[नात्] ॥

समुद्राज्जातानैरावणोच्चैश्श्रवोधन्वन्तरिपारिजाताञ्जननभुवि जन्मभुवि समुद्रे दविष्ठीभू(! 12)[ता]यां दूरं गते सति खिन्नानुद्विग्नानिव जानन्. जन्मभूमिस्समुद्र एषा दूरस्थ इत्युद्विग्नानामै(! 13)[रा]वणादीनां संभावनादित्यर्थः. रावणस्तानिमानैरावणादीन्लंका यदनयत्तथापि हठापह(!.14)[र]-णलज्जया ते सीदन्ति ॥  27.

> विजित्य ब्रह्माण्डभ्रमणनिपुणं पुष्पकमयं
> विलासप्रासादं पुर(! 15)⌣हत(?)* लङ्कां दशमुखः.
> असन्तुष्टो भ्रातुस्तदपि नियतं नेतुमलका-
> मुदस्यन्कैलासं वरदमिम(! 16)[मीशं] ज्वलयति ॥

ब्रह्माण्डेपि भ्रमणं तत्र निपुणं पुष्पकसंज्ञं विलासप्रासादं प्राप्याप्यसन्तु(! 17)ष्टो रावणो लङ्का नगरीं यदह(?)तदपि ततो नूनमसन्तुष्टो रावणो भ्रातुरलका हर्तुं कैला(! 18)[समु]त्क्षिपन्नावयो वरदमीश्वरं ज्वलयति ॥ 28.

---

1 Ms. ह्यप्पाहा- crossed after °न्ये  2 Ms °रच्छे°.  3 Ms °वर°.
4 Is it °रुद्ध्वन°?  5 Ms. °षन्न° See p. 163, note 5.  6 Is it यदहरत्व°? or यदनयत्व°?.  7 Is it °दहत्व°? or °रुनयत्°?

उत्क्षिप्तोयं मुहूर्तं स्फटिकगिरिरितश्चक्रवर्त्तिन्यमु(l.19)[विम्-
बन्त]स्संक्रान्तिभाजि प्रथमजलधरश्यामले राक्षसानां ।
देवस्यार्धेन्दुमौलेर्वपुरनुपग(l 20)[तत्वेपि?] मृत्युंजयाख्यं
पुष्णाति स्पष्टलक्ष्माभरणकुमुदिनीकान्तविम्बासनत्वम् ।

सजल(l 21)[मेघनि?]कामेस्मिन्राक्षसानां चक्रवर्तिनि रावणे प्रतिबि-
म्बिते सति मृत्युंजयसंज्ञं रूपमथा(l 22**72)रय[तोपि]प हरस्य प्रकटकल-
ङ्कचन्द्रविम्बाननत्वं कर्म स्तु............(l.1)यदा कैलासो रावणेन करामे
उत्क्षिप्तस्तदा रावणे प्रति[बिम्बिते?].........[मृत्युंजय](l.2)रूपोचितं
चन्द्रासनत्वं संपादयति ॥ 29.

लङ्कायां पुरि————————————(l.3)
प्रायं सोदरजातमातुरतमा यावत्प्रयुंक्ते रमा ।
तावत्त्वां————————————(l 4)णि-
ग्रामण्यं कृतकप्रसुप्तममरस्तोमः स्तुतिं प्रस्तुते ॥

.........(l 5)दम्राप्तावयसादं समुद्रमुखाच्छ्रुत्वात्याकुला लक्ष्मीस्त्वां
या[व]......(l.6)ण क्रीडासहाये फणि......पे कृतकं कृत्वा त्वां प्रसुप्तं
बुध्वा स्तुतिम......अयमर्थः रावणो(l.7)...द्दुर्तानामै[राव]णादी......-
मुपद्रवनिवारणार्थं लक्ष्मीस्त्वां यावत्प्रेरयति [तावद्देव]वर्गस्स्तुतिं कर्तुं प्र(l.8)-
वृत्तः ॥ 30.

आवेदितेषु दशकन्धरदुर्नयेषु
लज्जाभरानतमुखैस्त्रिदशै[ः पुरस्ते] ।
एतानि पश्य तनु[भृ(l.9)न्ति?] भृशं ज्वलन्ति
पातालसंतमसजिन्ति तवायुधानि ॥

राक्षसमात्रेण वयं जिता इति लज्जा(l.10)भरेण नम्रैश्च सद्भिर्देवै राव-
णाप[न]येषु तवाग्रे निवेदितेषु सत्सु देवतारूपमूर्तीनि तवायुधानि भृशं ज्व-
(l.11)लन्ति । अतः पाताले संतमसं जितवन्ति क्रोधादिति भावः ॥ 31.

1 Ms. °ःका° 2 Ms. चन्दा°. 3 Ms. °स्व. 4 Ms. °सत°. 5 Ms. तना°.
6 Ms. देवतारूप ic. under l,10.

पश्यामी चरणनखांशुभिस्त्वदी(1.12)यै-
र्गङ्गाम्भश्चिररचितानुचर्यचर्याः .
पेयूषोद्धरणदिनाधिकप्रमोदाः
क्षीरोदादमृत[भुजः स्व](1.13)मुत्पतन्ति ॥

त्वत्पादनखरश्मिभिर्हेतुभिर्गङ्गाजलेनेव चिरं रचितानुचर्यचर्या······-(1.14)···नखरश्मिभिः कृतगङ्गास्नाना इवेत्यर्थः अमृतभुजोमराः पेयूषस्योद्धरण······(1.15)दो येषां ते क्षीराम्बुनिधेर्दिवं गतास्त्वं पश्य . अयमर्थः रावणकृतमवमानं·········(1.16)प्रणम्य देवा गता नाकम् ॥ 32.

नाकेसदां परिषदि प्रतिमुच्य यान्त्यां
संवाहने चरण[योर्विहितो](1.17)द्यमायाः .
श्रीर्हारमध्यमणिदर्पणबिम्बितेयं
गर्भप्रवेशमिव वाञ्छति कर्तुमुर्व्याः ॥

······(1.18)मुच्य देववर्गे गते सति त्वत्पादसेवोद्यतायाः भूमेर्हारमध्यप्रतिबिम्बिता लक्ष्मीरन्तः प्रवेशं कर्तुमि(1.19)वेच्छति . अयमर्थः श्रीस्स्वामिनोतिप्रियां भुवं मत्वा तत्प्रवेशे इव प्रवृत्तेति अन्यश्च·········
[क](1.20)रोति ॥ 33.

शान्तां कान्तां च बिभ्रत्स्वतनुमिव तनुं पुत्र[कामेष्टियाजी?]
सावित्रस्यैष राज्ञो मुनिसदसि प(1.21)रामृश्यतामृश्यशृङ्गः .
शृङ्गं श्रुत्वा ललाटे⌣ ⌣ ⌣तरलितः काममस्यैव मध्या-
द्यो[रुत्कृत्य पा](1.22)त्रं कनकमयमयं पूर्णपात्रीकरोति ॥

नाम्ना शमित्वेन च शान्तां कान्तां कान्तिमतीं······(1.23)मूर्तं दधत्सावित्रस्य सूर्यवंश्यस्य राज्ञो दशरथस्य पुत्रकामेष्टियाजक ऋश्य···-······(1.24?)···········णे शृङ्गं श्रुत्वा साश्चर्योयं दशरथोग्नेर्मध्यात्पु-

1 Ms. °रद्य°. 2 Ms. °भिश°. 3 Ms. वान्त्°. 4 Is it युतुरन°?

वर्णपात्रमुत्पाद्या(1 1) · ····· तीत्यर्थः. अयमर्थ. दशरथस्य पुत्रकामेष्टिमृश्यशृङ्गो[1] यदाकरो(1 2)त्तदाग्नि ··· ····चरुपूर्णां दधत्पुरुषः प्रादुर्भूतः ततो दशरथस्तां सुवर्णपात्रीमृश्यशृ(1 3)ङ्गाय दत्तवान् ॥ 34.

यो़यं पयश्चरुरयं तुहिनांशुबिम्ब-
मेतत्तले कनकभाजनमेष भानुः.
अग्नेरुदेति(1 4) पुरुषो़यमिति त्रयाय
धामत्रयं घटितमत्र निशाचराणाम् ॥

यः क्षीरचरुस्स चन्द्रः क्षीरच(1 5)र्वाधारभूतं हेमपात्रं स सूर्यः अग्नेर्यः पुरुषो निर्गतस्सो़यमग्निरिति निशाचराणां क्षयार्थं धामत्रय सघ(1 6)टितमिति सभावनम् ॥ 35.

अम्भोधेरुदरे चिरस्य जनितं तेजोवधं निद्रया
संमृज्येव महर्षिमन्त्रनिन(1 7)दैः पुत्रीयया चानले.
वीर्यं वैष्णवमुद्गतं चरुमिषादेतद्धरित्रीभुज-
स्सावित्रस्य करद्वयेत्र पुरुषः(1 8) को़प्येष विन्यस्यति ॥

चिरं समुद्रमध्ये निद्रया जनितं तेजोवध मन्त्रध्वनिभिरग्नौ पुत्रीयेष्ट्या च होमेन(1 9) संमृज्य निवार्येव चरुरूपमुद्गतं विष्णुतेजः को़पि दिव्य एष पुरुषस्सावित्रस्य राज्ञो हस्तद्वये न्यस्यति(1 10). अयमर्थ तेजोजलयोरन्योन्यप्रतिपक्षभूतत्वात्समुद्रान्तर्निद्रया हरेस्तेजोवधो जातस्तस्य च शब्दै(1 11)र्होमेनं च निवृत्तिरुचिता ततो वीर्यं दशरथस्य दिव्य. पुमान्प्रतिपादयति ॥ 36.

दत्तात्कोशलकेकयेन्द्र(1 12)सुतयोरभ्यर्थिताभीष्टयो-
र्वाग्देवीरमयोरिवामृतचरोश्चिचादिवांशावुभौ.

---

1 Ms "मृग्यशृङ्ग" lc. on margin, "दशरथे" crossed in the text 2 Ms 'त्तुभे.
3 Ms समूह 4 Ms "चार्थं lc under 1 5 5 Ms सृ" 6 Ms 'निान?.
7 Ms "ंलेवये". 8 Ms "पुरुष lc under 1 9 9 Ms "रंमे" 10 Ms "केक".

लेभेसौ मलयेश्वरस्य(113) तनया पुण्यप्रतापौ यथा
नीतेः पूर्णमिवाप्तवान्सुतचतुर्वर्गं ततः पार्थि(114)वः ॥

सरस्वतीलक्ष्म्योरिव पूज्यवल्लभयोः कौसल्याकैकय्योः(115) दत्ताभ्रि-त्तादिव द्वौ भागौ पुण्यप्रतापाविव सुमि(116)त्रा लेभे ततो राजा नीतेः पूर्णं नीतिमयं सुतानेव चतुर्वर्गं धर्मार्थकाममोक्षांल्लब्धवान्(117). पूरणगुणेति षष्ठी. अयमर्थः कौसल्या वाग्देवीवदभ्यर्चिता कैकेयी लक्ष्मीवदभीष्टा (118)ताभ्यां दशरथाचित्तचरुभागः प्राप्तः ताभ्यां च दाक्षिण्यात्सुमित्रायै भागांशौ दत्तौ इति पुत्रचतु(119)ष्टयोत्पत्तिरित्यर्थः ॥ 37.

जन्मान्तरं स्वयमरिष्टगृहे तदेत-
देव त्वमत्र परिभावय रामनाम ·
हस्ता(120)ङ्गुलीविनिदधद्वदने पुरैव
पौलस्त्यमूर्धगणनामिव निर्मिमाणम् ॥

राम इति नाम यत्र(121) [तज्जन्मा]न्तरमर्थात्पूर्वरूपं परिभावय पश्य अरिष्टगृहे सूतिकागृहे मुखे हस्ताङ्गुलीः क्षि(122)······संभाव्यते पुरैव प्रथममेव रावणशिरोदर्शकसंख्यामिव कुर्वत् ॥ अयमर्थः स्वभावे(123)-······ङ्गुलीर्बाला आस्ये क्षिपन्ति तत्रोत्प्रेक्ष्यते दशाननस्य शिरोगणनाहेतोः क्षिपतीति ॥(124··73) 38.

सेयं कोसलचक्रवर्तितनया त्वत्पीतवामस्तनी
देवी ल[क्ष्मणपीतदक्षिणकुचा?]———(11)दृशोः ·
शत्रुघ्नेन सह स्तनंधयंयुता कैकेय्यसावप्यसौ
———————[सु](12)मित्रा सुखम् ॥

सेयं कौसल्या देवीहास्ति कीदृशी त्वया पीतो वामस्त[नो यस्याः]

1 Copyist leaves a blank between 'दर' and 'व', 'र्थि' and 'र', 'भ्ये' and 'द', 'नि' and 'श्रा'. 2 Ms 'सखे. 3 Ms. 'वं। 4 Panini, 2 2 11. 5 Ms 'गम'. 6 Ms 'वेन्' 7 Ms has ष. रा. प. vertically on margin. 8 Ms 'नवडु'.

·········(13)पीतो दक्षिण' कुचो यस्या. अतस्सापत्न्येऽपि स्नेहाधिक्याद्द्रष्टयोर्गाङ्गेयायात्रेत्यारोप (?) भरतशत्रुघ्नाभ्या पीत(14)स्तनी असौ च कैकेयी असौ सुमित्रा सपत्नीविनयान्नतमुख्यस्ति . हेतुरुत्प्रेक्ष्यते . निष्प्रयोजनास्तन्य(15)भरात् . स्नेहदाक्षिण्यवशात्कौसल्याकैकेयीभ्या सुमित्रातनययोः पोषितत्वादिति भाव ॥ 39.

अ[न्वितौ](16) रामभरतौ रविनारायणाविव .
इमौ लक्ष्मणशत्रुघ्नौ विनतानन्दनाविव ॥

सूर्यनारायणावि(17)व रामभरतौ अन्विताववियुतौ सह लिखिताविह स्तः विनतानन्दनौ अरुणगरुडाविव लक्ष्मण(18)शत्रुघ्नाविह स्त . अयं भाव. रविनारायणौ कश्यपसुतौ वयोर्द्वैमातुरौ विनतासुतौ यथा त(19)था रामभरतयोर्लक्ष्मणशत्रुघ्नौ ॥ 40.

उपनयनगृहं तदेतदस्मिन्मुनिरयमाभरणाय(10)ते वसिष्ठः .
अधरिततपनैर्महोभिरस्य भवलयतीव निजं वपुः कृशानुः ॥

तदुपनयनगृह(11)मेतत् . अस्मिन्नुपनयनावासेय वसिष्ठो भूषणीभूतः सूर्याधिकैरस्यैव तेजोभिरत्राग्निस्स्वदी(12)प्ति प्रवलामिव कुरुते . आज्यादिजाता तेजोवृद्धिर्वसिष्ठतेजोभि कृतेति सम्भावनम् ॥ 41.

चूडापं(13)चकमण्डनीकृतनखज्योत्स्नाप्रसूनोत्करः
पर्यायेण मुनिर्विभाति भवतां पा—श्चतुर्णामयम् .(14)
मन्येनेन सुतेजसा विरचिते पश्चाद्गमन्त्रार्पणे
देवस्याद्यतनेपि जन्मनि मनाङ्नास्ति कश्चिद्दुर्न(15)यः ॥

क्रमेण चतुर्णां भवता चूडापञ्चके मण्डनीकृतो नखज्योत्स्नापुष्पसमूहो येन तेजस्वि(16)ना पञ्चाङ्गस्य मन्त्रस्यार्पणे कृते सत्यस्मिन्जन्मन्यपि कापि न तव दुर्नय इत्यहं जाने . पूर्वजन्मा(17)न्तरे यस्तेनाशीर्वादः प्रयुक्तस्तन्माहात्म्यादद्यापि भवता सर्वत्र प्रसिद्धिरित्यर्थ ॥ 42.

1 Ms 'या' lc under 1 4 2 Ms 'योर्द्वैमातरौ 3 Ms 'योर्न'. 4 Ms त्वाद'

अयमृषि(1 18)नृपा विश्वामित्रस्तपोग्निदिधित्तित-
त्रिजगदभयक्रीडादानप्रतिग्रहिवेधसम् .
उपकरणतां(1 19)मानेतुं त्वां जगन्निधिमध्वरे
रघुकुलपतेर्धन्यस्याग्रे प्रसारितवान्करम् ॥

अयं विश्वामित्र(1 20) ऋषिर्दशरथस्याग्रे हस्तं प्रसारितवान् किं कर्त्तुं त्वां यज्ञे उपकरणतां नेतुं तपसाग्निनैव(1 21) दग्धुमिष्टं यत्त्रिभुवनं तस्याभयक्रीडादाने प्रतिग्रही वेधा ब्रह्मा यस्य तम् दश······(1 22)को भूत्वा विश्वामित्रस्त्वां यज्ञरक्षणार्थं नीतवानित्यर्थः ॥ 43.

उपाकुरुत कौशिक⏑ ⏑ ⏑–[त्रि](1 23)शङ्कुं पुरा
ततः कुलपरम्परागतमृणं मृजां नेष्यतः .
अनन्तवपुषा धृता⏑ – ⏑ – ⏑ – ⏑ – ⏑ –(1 24*)
⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ ⏑ [पा]दपातेन ते ॥

कौशिको विश्वामित्रस्त्रिशङ्कुनामानं राजानम्(1 1)[प]······त्रिशङ्कौ स्वर्गं पतितम् . ततो हेतोः कुलक्रमागतं त्रिशङ्कूपकाराख्य(1 2)मृणं शुद्धिं नेष्यत[स्त]व पदपातेन भूरियं सुस्थतां व्रजति शेषशरीरेण शिरसि धृता सती दौःस्थ्यं म(1 3)न्यमाना . अयमर्थः . पूर्वर्णं शोधयतस्तव पादपातं शेषशिरोधराणामुत्तमं मन्यते इति ॥ 44.

देव(1 4)स्यैकशरेण भिन्नहृदया सेयं पुरस्ताटका
पुत्रस्याब्धिमुपेष्यतोऽस्रमरुता मार्गोपदेशोन्मुखी .
त(1 5)त्कालं स्तनभृङ्गसङ्कटविनिर्यातेन रक्तापगा-
पूरेणैव निजेन लाघववती दूरं यतो नीयते ॥(1 6)

भवत एकेनैव शरेण भिन्ना ताटका सेयमत्र लिखितास्ति इयमस्रवा-

---

1 Ms 'नभृति'. 2 Ms. 'रथ'. 3 Ms वदु 4 Ms. 'नित्य'.
5 Ms तद्, 6 Ms. 'षप्पता. 7 Ms. 'त्रौपति'.

युना समुद्रं गमिष्य(17)तः पुत्रस्य मारीचनाम्नो राक्षसस्य मार्गोपदेशे संमुखी ताटका पूर्वं समुद्रं प्राप्ता पश्चात्तत्पुत्र इत्यर्थ (18). अत्रोपपत्तिमाह स्तनावेव शृङ्गसङ्कटं ततो निर्गतेन रक्तनदीप्रवाहेण स्वेनैव यस्माद्दूरमपसा-(19)र्यते सप्तसमुद्रं(?) प्राप्यते ॥ 45.

न्यस्तं दीर्घतपःप्रसादनकृते स्वर्दन्तिकुम्भस्थला-
दाहृ(110)त्यैव बिडौजसा सुभगतासर्वस्वमाविभ्रता ।
काठिन्यं कुचमण्डलेन दधती गात्रान्तरैरुज्झि(111)तं
पश्येमां स्वमहोभिरुद्धतमनश्शल्यामहल्यामितः ॥

दीर्घतपसो गौतमस्य प्रसादना(112)र्थं रोपनिवारणार्थं बिडौजसेन्द्रेणैरावणकवाटादानीय दत्तं सौभाग्यमेव सर्वस्वं धारय(113)······तदङ्गान्तरैस्त्यक्तं निविडत्वं स्तनाभ्यां दधतीति ·········त्यां त्वया निजतेजोभिरुद्धृतं मनश्शल्यं शि(114)लाभावप्राप्तिलक्षणशापो यस्यास्तां पश्य ॥ 46.

विश्वामित्रमुनेस्तपोवनमिदं भित्त्वा सुबाहुं बला(115)-
द्देवस्यात्र सहायतामुपगतैः प्राणैस्तदीयैरिव ।
सान्द्रत्वं गमितेन पत्रमरुता मायामृगत्वो(116)चितं
मारीचं पुरतोयमाशुगदशामध्यापयत्याशुगः ॥

विश्वामित्रस्येदं तपोवनं भवति अत्र(117) तपोवने सुबाहुं हत्वायमाशुगश्शरो मारीचनाभाने राक्षसमाशुगदशां द्रुतापसरणमध्याप(118)यति . शरे दत्ते मारीचः पलायते इत्यर्थः . मायया मृगस्तद्भावे उचितां . मृगा हि द्रुतगामिन.(119) . अत्र संभाव्यते साहायकं कुर्वद्भिस्सुबाहुप्राणैरिवाधिकीकृतेन पत्त्रवायुनेति . मारीचो भीत्या न पला(120)[यितः किं] तर्हि शरपत्त्रपवनेनैव दूरमपसारित इत्यर्थः आशुगस्याशुगमनाध्यापनमुचितमि(121)·········ति ॥ 47.

1 Ms पूर्वे lc under 1 7 2 Ms 'टोज'. 3 Ms 'ज्झित्वा 4 Copyist leaves space between 'स्त and धा' but no letter seems missing 5 Ms- 'हर' 6 Ms '(चि'. 7 Ms. 'यतेत्यर्था'.

श्वशुरवसतिस्सेयं प्राची पुरो मिथिलापुरी
प्रथमघटनिन्यासादुर्वीमयं(1 22) [वपुरैश्वरम्?].
चरमघनमच्चापं यस्यां पुरा धरणीसुतां
स्वभुजमहिमा देयायादात्ततो ज(1 23**74²)नकेश्वरः ॥

श्वशुरस्य जनकराजस्य वसतिर्नगरी सेयं············(1 1)भवति यस्यां धनुष्कोटिन्यासाद्भूमिमयमीश्वरसंबन्धि वपुः·········(1 2)अनमत यथा यस्यां भवते स्वभुजबलं सीतां पूर्वं ददौ पश्चाज्जनकः ॥ 48.

अ[त्रुट्यद्घटनाद्रवासनतया?](1 3) मुक्तापि गौरीशतां
गाढाकर्षणलीलया विघटनाभीतेन देहार्धयोः.
मन्दं मन्दमकर्षि यद्भ(1 4)गवता दोर्लाघवालोकने
कोदण्डं तदपण्डितं दलितवानत्र प्रभुस्तत्रपे ॥

प्रभुर्भवांस्तत्रपे(1 5) लज्जे. अत्र हेतुमाह कोदण्डं दलितवान्भग्नवान्. कीदृशं तदपण्डितं तस्मिन्दलने अपण्ड(1.6)तमनभिज्ञं सहसैव दलनादिति भावः. सहसा हि मारितश्चौरादिः कारणं न जानाति. केन(1 7) हेतुना दलितवानित्याह दोषोर्भुजयोर्लाघवस्यालोकने. निमित्तसप्तमीयं. तत्किमित्याह(1 8) परमेश्वरेण यन्मन्दं मन्दं कृष्टम्. कदाचित्तस्य देहार्धे गौरी स्यादित्याह गौरीशतामर्धनारीश्व(1 9)रत्वं त्यक्त्वापि. यद्यस्य देहार्धे गौरी नास्ति केन हेतुना धनुर्मन्दमाकृष्टमित्याह गाढं बलेनाक(1 10)र्षणं तस्य लीला विधानं तया निजदेहयोर्देहार्धयोर्विघटनायास्संधिविश्लेषाद्भीतेन. भीतौ हे(1.11)तुमाह घटनया संयोजनेन यदङ्गमर्धनारीश्वरत्वं तस्य वासना संस्कारस्मृतिरत्रुट्यन्ती स्थिरा य(1.12)स्य तद्भावेन. अयमर्थः गौर्या वामार्धं योजितमपनयि स्ववामार्धं मया योजितमतो गाढं धनुष्क(1.13)र्षणात्तन्मा भाङ्क्षीदिति भगवान्यन्मन्दमकृष्यत्तच्चापमहं भग्नवानिति लज्जां प्राप्तवान्

1 Ms. °द्वौं°. 2 Ms. has ए. ए. ए. on margin. 3 Ms. पु. Restore पूर्वमनमत् पश्चादनु: भ°. 4 Ms. °श्चोरा°. 5 Ms. °मान. 6 Ms. मस्त्री°.

पुना समुद्रं गमिष्य(17)तः पुत्रस्य मारीचनाम्नो राक्षसस्य मार्गोपदेशे सं-
मुखी ताटका पूर्वं समुद्रं प्राप्ता पश्चात्तत्पुत्र इत्यर्थः(18). अत्रोपपत्तिमाह
स्तनावेव शृङ्गसङ्कटे ततो निर्गतेन रक्तनदीप्रवाहेण स्वेनैव यस्माद्दूरमपसा-
(19)र्यते सप्तसमुद्रं(?) प्राप्यते ॥ 45.

न्यस्तं दीर्घतपःप्रसादनकृते स्वर्दन्तिकुम्भस्थला-
दाहृ(110)त्यैव विडौजसा सुभगतासर्वस्वमाविभ्रता ।
काठिन्यं कुचमण्डलेन दधती गात्रान्तरैरुज्झि(111)तं
पश्यैमां स्वमहोभिरुद्धतमनश्शल्यामहल्यामितः ॥

दीर्घतपसो गौतमस्य प्रसादना(112)र्थं रोषनिवारणार्थं विडौजसेन्द्रे-
णैरावणकवाटादानीय दत्तं सौभाग्यमेव सर्वस्वं धारय(113)······ताङ्गा-
न्तरैस्त्यक्तं निविडत्वं स्तनाभ्यां दधतीति ········ल्यां त्वया निजतेजोभि-
रुद्धृतं मनश्शल्यं शि(114)लाभावप्राप्तिलक्षणश्शापो यस्यास्तां पश्य ॥ 46.

विश्वामित्रमुनेस्तपोवनमिदं भित्त्वा सुबाहुं बला(115)-
द्देवस्यात्र सहायतामुपगतैः प्राणैस्तदीयैरिव ।
सान्द्रत्वं गमितेन पत्त्रमरुता मायामृगत्वो(116)चितं
मारीचं पुरतोयमाशुगदशामध्यापयत्याशुगः ॥

विश्वामित्रस्येदं तपोवनं भवति अत्र(117) तपोवने सुबाहुं हत्वायमा-
शुगश्शरो मारीचनामानं राक्षसमाशुगदशा द्रुतापसरणमध्याप(118)यति ।
शरे दत्ते मारीचः पलायते इत्यर्थः । मायया मृगस्तद्भावे उचिता । मृगा हि
द्रुतगामिनः(119) । अत्र संभाव्यते साहायकं कुर्वद्भिस्सुबाहुप्राणैरिवाधि-
कीकृतेन पत्त्रवायुनेति । मारीचो भीत्या न पला(120)[यितः किं] तर्हि शर-
पत्त्रपवनेनैव दूरमपसारित इत्यर्थः आशुगस्याशुगमनाध्यापनमुचितमि(121)
··········ति ॥ 47.

1 Ms पूर्वं lc under l 7  2 Ms °टाब°.  3 Ms °ज्झिता  4 Copyist leaves space between °रै and धा° but no letter seems missing. 5 Ms °ङ्गा°
6 Ms °चि°.  7 Ms. °यन्त्येथंमा°.

श्रीरामस्य मुखाभ्यां सम(1 5)समयं युगपन्नताभ्यां स्थितम् . श्रीरामस्य ब्राह्मणजयित्वादन्यस्य च जितत्वाल्लज्जाया हेत्वन्तरसंभावनं ॥(1 6)　　52.

आशाचतुष्टयविभङ्गुरजामदग्न्य-
कीर्तिप्रतापमिथुनारचितानुचर्यैः .
कान्तानुगैरनुगतस्तनयैश्च(1 7)तुर्भि-
स्सोयं नृपो दशरथः प्रविशत्ययोध्याम् ॥

आशाचतुष्टयाद्विभङ्गुरमानंतं यज्जामदग्न्यस्य की(1.8)र्तिप्रतापरूपं मिथुनं तेनाचरितानुचर्यैरनुगतैर्जायासहितैः पुत्रैश्चतुर्भिस्सहितो दशरथस्सोयं वि(1 9)शत्ययोध्याम् ॥　　53.

ज्येष्ठप्रवासविधिरस्य न सन्निधाने
धर्मानुबन्धनधनस्य भविष्यतीति .
आकृष्यमाण इ(1 10)व रावणदुर्निमित्तै-
र्मातामहस्य भवनं भरतोपमेति ॥

धार्मिकस्यास्य सन्निधाने सति ज्येष्ठस्य(1 11) प्रवसनं न संपद्यते इत्यतो रावणपापैराकृष्यमाण इव भरतो मातामहगृहं गच्छति ॥　　54.

जानयत्येत्र(1.12) गुणानुबन्धनतया देवो धनुर्लेखया
शत्रुघ्नप्रमथेन सार्धममुना भ्रातेव तूर्णेन च .
सत्येन स्वलि(1 13)ता पितुर्न्नसुमती राज्याभिषेकेण मे
यथार्द्रत्वमुपैष्यतीति चकितो मुञ्चत्ययोध्यामयम् ॥(1.14)

गुणानां शीलादीनां गुणस्य मौर्व्याश्चानुबन्धेन नवया संतत्येव चापलवया सह तथा शत्रुघ्नेषु(1.15) प्रथमेन निषङ्गेणेव लक्ष्मणेन च सहायं रामोयोध्यां त्यजति . कथं चकितं . चकितत्वे हेतु(1 16)मांह मम राज्याभि-

1 Ms 'मितु'.　2 Ms 'नभुन'.　3 Ms 'मात्र'.　4 Ms 'ष्ट श'.
5 Ms 'नवे'.　6 Ms blank before 'न'

वीराणा(। 14) न तदुपयोग्यमिति धनुर्भङ्गो लज्जाकर . सभावनेयम् अथवा त्रुन्यदिति गौरी हेतु (। 15) अत्रुम्यन्ती स्थिरा घटना यस्य तस्मि-न्नङ्गे वासना यस्य तद्भावेन यथा धनुष्कर्षणेङ्गाना श्लेषो भवति(। 16) ततो गौरीशत्वे त्यक्तेपि स्वाङ्गसन्धिभङ्गभयाद्धनुषो मन्दकर्षण सभाव्यते ॥ 49

> अस्माद्दैवतमूर्तिलोचन(। 17)युगाच्चन्द्रार्कतेजोमया
> दानन्दाश्रुजलायमानमुदितं राजन्यवशद्वयम् .
> निश्शेष प्रममार्ज(। 18) यः करयुग व्यापारयन्नीडया
> पुण्यैर्नेत्रयुगं पवित्रयति नस्सोय मुनिर्भार्गवः ॥

हर्षवाष्पक(। 19)णसमान सूर्येन्दुमयादस्मान्नेत्रयुगादुत्पन्न राजवशद्वय दैवतमूर्तिकमपि यो भुजद्वयव्या(। 20)पारमात्रेण हतवान्सोय भृगुपुत्रो मुनि पुण्यैर्नो दृष्टि पवित्रयति पुण्यवशादेतद्दर्शन(। 21) भवतीत्यर्थ ॥ 50.

> चाप चक्रायुधस्य(?) श्वसुरगृहगतत्र्यक्षविक्षेपचाप-
> द्रोहव्रीडातिभारा(। 22)नतमुखमिलितोदात्तवीरधर्मः .
> वीर्येणार्धेन दोष्णोर्मृदुमृदु दलनातङ्कसा———(। 23)-
> न्देवो वैलक्ष्यहासस्तुतिकुसुमचयैरर्च्यते भार्गवेण ॥

जनकस्य गृहे निक्षिप्त (। 24*) नतमुख कृत्वा मिलितावुदात्ततावीरधर्मौ यस्य स भगवान्किचिद्दले(। 1) वेण वैल-क्ष्यहासस्त्रपाहसित तस्य स्तुतिभिरेव पुष्पप्रसरै पूज्यते ॥(। 2) 51

अवनिमपहृतां जहौ यदेकः क्षितिपतिसाद्विदधे पुनर्यदन्यः .
समसमयमतस्स्थित नताभ्या जितज(। 3)यिनोरिह रामयोर्मुखाभ्याम् ॥

रामभद्रपरशुरामयोर्मध्यादेको हृता जिता भूमिं तत्याज अन्यो दाश-(। 4)रथि पुनरवनिं राजसादकरोत् अत इव जितस्य परशुरामस्य जयिन-

---

1 Ms पात 2 Ms गौरी° 3 Ms °रथ° 4 Ms °क्षये
5 Ms °यत्नी° 6 Is it निक्षेप ?

रामपादुका जटाबन्धं वि(1.6)ना न शोभते इति ज्येष्ठस्य श्रीरामस्यानुवृत्तिभवी सन्नूमसमीपात्याति निवर्तते ॥ 59.

कुचतटम[नम](1 7)यादत्तदिव्याङ्गराग-
च्छुरितमभि दधानो मातुलुङ्गीफलेच्छाम्.
अत्रिदुहितुरैन्द्रिस्संस्पृशन्नेष(1 8) काक-
स्समुपलभतेक्ष्णोरेकशेषं स्वजात्या ॥

अनसूयादत्तेन दिव्याङ्गरागेण च्छुरितं स्तनम[ण्डलम](1 9)भि बीजपूरफलभ्रांतिं दधानस्सन्नतस्संस्पृशंस्तक्षयन्नेष ऐन्द्रिः काकस्स्वजात्या काककुलेन सह(1.10) नेत्रयोरेकशेषमेकनेत्रत्वं लभते. सीतास्तनस्पर्शात्काकस्य श्रीराम इषिकास्त्रं दत्तवान्. रामवि(1.11)सृष्टेषीकास्त्रप्रभावात्समस्ता अपि काकाः काणास्संपन्ना इत्यर्थः ॥ 60.

रुद्धा विराधरुधिरेण धरेति(1.12) कामं
काकास्सहस्रनयनत्वमिमे चकाङ्क्षुः.
धाराधरस्य चरितेन दुरात्मनस्तु
नैसर्गिकं द्विनयन(1 13)त्वमपि व्यतीयुः ॥

रामेण हतस्य विराधनाम्नो रक्षसो रक्तेन भूर्व्याप्तेति लोभात्काकास्स्वात्मनोक्षिसह(1 14)स्रमभ्यलपन्. धराधरनाम्नः काकस्यापराधेन स्वाभाविकं द्विदृष्टित्वमपि ते तत्यजुः. सर्वे का(1.15)काः काणास्संपन्ना इत्यर्थः ॥ 61.

करेणाङ्घ्रिवाराचमनशुचिना मूर्धनि मुनि-
र्धृतेनार्यं रामं नि(1.16)जमिह महस्संक्रमयति.
अगस्त्यादक्षारावगमयदधो यः क्षितिभृतौ
कृतेच्छौ मेरोरप्युपरि भवि(1.17)तुं विन्ध्यनहुषौ ॥

योगस्त्यमुनिर्विन्ध्यनहुषौ क्षितिभृतौ पर्वतराजानौ अधो गमयन्नोच्चैः-

1 Text थ॰. 2 Ms. नि॰ पृ॰. 3 Ms. ॰हुषो.

पेकेण भूयेयार्द्रत्वमेष्यति तदा पितुस्सत्येन स्खलिता स्खलनं प्राप्स्यते. रा(1.17)ज्यं त्यक्त्वा रामस्तूर्णं वनं गत इत्यर्थः. स्खलितेति लुट् ॥ 55.

शृङ्गवेरपुरमेतदिङ्गुदीपादपोयमियमालवालभूः.
अत्र नूतनजटाधरे प्रिये पाणिरुद्धनयनास्ति जानकी ॥

अत्र शृङ्गवेरपुरा(1.19)दौ रामे जटाधरे संपन्ने सति सीता हस्ताच्छादितनेत्रास्ति ॥ 56.

बदरीविपिने तपस्विनोर्नरनारा(1.20)यणयोरिवानयोः.
अयमेकपदेत्र जायते द्युनदीपोतयुतस्सखा गुहः ॥

बदर्याश्रमे तपस्य(1.21)[तोर्नरना]रायणयोरिव रामलक्ष्मणयोरयं गुहनामा गङ्गाप्रवहणसहितस्सन्नत्रैकपदे स(1.22)[खा]······गुहो गङ्गामेतावंवतारयदित्यर्थः. गणपतिकुमारौ च नरनारायणयोर्बदर्याश्रमे सखायौ संपन्नौ ॥(1.23**75*) 57.

जनकदुहितृसोदरत्वबुद्ध्या धरणिरुहैरविमात्रभातिथेयैः.
ज[यति ————————प्रथमत](1.1)पोवनमेष चित्रकूटः ॥

सीतायास्सोदरा वयमिति मत्वेवात्यर्थमर्थि·········[जय](1.2)ति सर्वोत्कर्षेण वर्तते प्रथममार्यं तपोवनम् ॥ 58.

गङ्गेवोपरि शङ्करस्य न जटावन्धं विना शोभते
मेध्या मंत्र(1.3)जपादुकेति भरतो ज्येष्ठानुवृत्तिव्रती.
पौलस्त्याभिभवावसानसमयं वक्तुं गतं नाकिना-
मावासं पितरं निवे(1.4)द्य विमुखो यात्येष रामान्तिकम् ॥

रावणकृतपराभवसमाप्तिं देवानां वक्तुमिव स्वर्गं गतं पितरं दशर(1.5)थं निवेद्य विमुखो रामेण कृतप्रार्थनाभङ्गस्सन्नेष भरतो हरस्येव मे गङ्गेव

1 Ms. 'री ति'. 2 Ms. 'क्रम'. 3 Ms. has ए. ग्रा. ह. vertically on margin. 4 Ms. 'ध्यान'. 5 Ms. 'मेन'.

रामपादुका जटाबन्धं वि(1.6)ना न शोभते इति ज्येष्ठस्य श्रीरामस्यानुवृत्तिव्रती सन्नाममसमीपाद्याति निवर्तते ॥ 59.

कुचतटम[नघ](1.7)यादत्तदिव्याङ्गराग-
च्छुरितमभि दधानो मातुलुङ्गीफलेच्छाम् .
अत्रिदुहितुरैन्द्रिस्संस्पृशन्नेष(1.8) काक-
स्समपुपलभतेऽक्ष्णोरेकशेषं स्वजात्या ॥

अनसूयादत्तेन दिव्याङ्गरागेण च्छुरितं स्तनम[ण्डलम](1.9)भि बीजपूरफलभ्रांति दधानस्सन्नतस्संस्पृशंस्तत्क्षयन्नेष ऐन्द्रिः काकस्वजात्या काककुलेन सह(1.10) नेत्रयोरेकशेषमेकनेत्रत्वं लभते . सीतास्तनस्पर्शात्काकस्य श्रीराम इषीकास्त्रं दत्तवान् . रामवि(1.11)सृष्टेषीकास्त्रप्रभावात्समस्ता अपि काकाः काणास्संपन्ना इत्यर्थः ॥ 60.

रुद्धा विराधरुधिरेण धरेति(1.12) कामं
काकास्सहस्रनयनत्वमिमे चकाङ्क्षुः .
धाराधरस्य चरितेन दुरात्मनस्तु
नैसर्गिकं द्विनयन(1.13)त्वमपि व्यतीयुः ॥

रामेण हतस्य विराधनाम्नो रक्षसो रक्तेन भूर्व्याप्तेति लोभात्काकास्स्वात्मनोऽक्षिसह(1.14)स्रमभ्यलषन् . धराधरनाम्नः काकस्यापराधेन स्वाभाविकं द्विदृष्टित्वमपि ते तत्यजुः . सर्वे का(1.15)काः काणास्संपन्ना इत्यर्थः ॥ 61.

करेणाकूवाराचमनशुचिना मूर्धनि मुनि-
र्धृतेनायं रामे नि(1.16)जमिह महस्संक्रमयति .
अशङ्काहङ्कारावगमयदधो यः क्षितिभृतौ
कृतेच्छौ मेरोरप्युपरि भवि(1.17)तुं विन्ध्यनहुषौ ॥

योगस्त्यमुनिर्विन्ध्यनहुषौ क्षितिभृतौ पर्वतराजानौ अधो गमयन्नीचीकृ-

1 Text धारा°. 2 Ms. °नि. ष्ट°. 3 Ms. °दुषौ.

तवान् (। 18) कीदृशौ मेरोरप्युपरि भवितु मेरुमपि जेतु कृतेच्छौ तथा महाहुकारौ अयमगस्त्य समुद्रा(। 19)चमनशुद्धेन शिरसि स्थापितेन हस्तेन दाशरथौ स्वतेजस्सन्नामयति प्रतिपादयति ॥(। 20) 62.

सुरतरुपञ्चकमेषा मुनिष्वशरणेषु जयति पञ्चवटी ।
शूर्पणखाच्छललक्ष्मा लक्ष्मणयशोयमत्र(। 21)स्ते ॥

मुनिष्वशरणेष्वेषा पञ्चवटी कल्पवृक्षादीञ्जयति मुनीना रक्षणात् । शू[र्पणखाया](। 22) अच्छल छलवर्ज लक्ष्माणि कर्णनासाच्छेदो यस्मात्स लक्ष्मण एव यशोत्रास्ते य (। 23*) 63

———[श्रवणद्वयनासि?]कौघं-
पञ्चाहुतिप्रगुणित पुरतोनुजेन ।
पत्नीसमक्षमिह पचवटी ———(। 1)
[रक्षस्समिद्भिरजुहोद्द्विज]जाठराग्निम् ॥

अनुजेन लक्ष्मणेन पुरत पूर्वं शूर्पणखाकर्णनासौ(। 2)घ्नेनेवं पञ्चाहुतिभि प्रगुणित द्विजाना क्रव्यात्पक्षिणा गृध्रादीना जठराग्निमुदराग्नि रामस्सीताग्रे(। 3) रक्षस्समिद्भि राक्षसैस्सह युद्धेऽजुहोदतर्पयत् अग्निहोत्रे च पञ्चाहुतयो भवन्ति समिद्भिरि(। 4)ध्मैश्चाग्निस्तर्पितो भवति ॥ 64

त्रिशिरसि शर्वरीचरसहस्रचतुर्दशके
तदिह कवन्धवृत्तमुदपाटि(। 5) चतुर्दशधा ।
भयचकितेषु येन भुवनेषु चतुर्दशसु
त्रिपुररिपोर्व्यलम्भत दिनान्तमहानटता ॥

शर्वरीच(। 6)राणा सहस्रचतुर्दशके विगतशिरसि सति चतुर्दशप्रकारं

---

1 Ms. न्यात ie under l 21 2 Ms शर्पणं 3 Ms °न्या ie under l 20
4 Ms ध्मं 5 Ms 'काट' 6 Ms शर्वरं 7 Ms ष°, blank after तो

नृत्तमुत्पन्नं येन भुवनेषु(1.7) भयसम्भ्रान्तेषु सत्सु हरस्य नृत्तविलम्बो जातः. हरस्यापि नृत्तं दृष्ट्वाश्चर्यमुत्पन्नमित्यर्थः ॥ 65.

देशस्सोयं(1.8) शबररमणीगीतकाकुत्स्थकीर्ति-
श्रुत्युत्कण्ठावहितनिहतप्राणिसुप्रापनाकः.
मायात्मापि व्यधित(1.9) नयनस्पर्धया वर्धमान-
क्रोधः प्राणैरपि स हरिणो यत्र सीतापकारम् ॥

शबररमणीभिर्गीतायाः(1.10) काकुत्स्थकीर्तेश्श्रुत्वाकर्णने उत्कण्ठिता-वहितास्सावधाना अत एव निहता ये प्राणिनो मृगास्तैस्सुप्रा(1.11)पस्सुलभो नाको यत्र सः. नारायणं हि स्मरतां मरणप्राप्त्या स्वर्गप्राप्तिः. एवंविधस्सोयं देशः ने(1.12)त्रस्पर्धयेवातिक्रुद्धो हरिणरूपो मारीचः प्राणैरपि सीतापकारमकरोत् ॥ 66.

रूपं न मन्त्रमहसामपि तत्प्रकाश्यं(1.13)
[दूरं मनो] नयति यज्जनकात्मजायाः.
इत्थं विदन्निव विशन्नुटजं पुरोगं
वैरूप्यमेव विदधे दशकण्ठ(1.14)भिक्षुः ॥

यद्रूपं रामात्सीतायाश्चित्तं दूरीकुरुते तद्रूपं मन्त्रमहसां देवानामपि न प्रकाश्यम् (1.15) देवानामपि तद्रूपमसंभाव्यमित्यर्थः एवं जानन्निव रावणभिक्षुः पर्णशालां विशन्नेव पूर्वमेव वि(1.16)रूपतामकरोत् ॥ 67.

प्राणान्स्वयौवनजवातिजवान्विसृज्य
स्वर्गस्थितं दशरथं प्रति बालमित्रम्.(1.17)
उत्कृत्तपक्षतिरिहाद्य निशाचरेण
नोद्ग्रीवतां भजति मानधनो जटायुः ॥

1 Ms. Blank after 'पु'. 2 Ms. 'वठावि'. 3 Ms. 'स्य' 'ते'. 4 Ms lc. under l. 13. 5 Ms. 'न्ति'. 6 Ms 'प्रात्'. 7 Ms. 'त्वप'. 8 Ms 'वमु' (!)

वालमित्रं स्वर्गस्थं दशर(। 18)थं[1] प्राणान्स्वयौवनजववदतित्रवांस्तूर्णगामिनः प्रतिमुच्य जटायुर्दशास्येन लूनपक्षो नोदग्री(। 19)वतां भजति शिरो नोन्नमयति मानधनो जटायू रावणेन हत इत्यर्थः. मानी चावमानितस्सञ्शिरो(। 20) [नोन्नमय]ति ॥ 68.

नीत्वा पावकतां जटायुवपुषा सर्वाशिनं पावकं
देवोयं पितृमित्रघातिनम(। 21)[रिं बुध्वाचि?]राद्रावणम्.
सुग्रीवस्य चकार दुन्दुभिवपुःकङ्कालवैकर्तनि-
क्रीडापर्वतमारुतास्त्र(। 22) ⏑ ⏑ — — ⏑ पूतं शिरः ॥

सर्वाशित्वादपवित्रमग्निं जटायुदेहहोमात्पवित्रीकृत्य पितृमित्रं(। 23**7b) जटायुं हतवन्तं रावणमरिं बुध्वा रामस्सुग्रीवस्य शिरः पूतमकरो[त्······कङ्का](। 1)लः कलेवरमेव वैकर्तनिक्रीडापर्वतो यमलीलाद्रिस्तस्य मारुता[स्त्र··········](। 2)द्दिकं कृत्वा सुग्रीवं स्वपक्षीकृतवानित्यर्थः ॥ 69.

कक्षाकुक्षिगतस्य [हहयधैनुर्ज्याबन्धपीडाजडा-
न्स](। 3)व्रीडो दशकंधरस्य निविडं नापीडयद्यो भुजान्.
तस्मिन्वालिनि सप्तलोकविजयस्तम्भायमानान्पु(। 4)र-
स्तालान्सप्त विदार्य दारुणजवो रामेषुरेष च्युतः ॥

हैहयस्य कार्तवीर्यस्य धनुर्ज्याबन्धपीडा त(। 5)या जडान्रावणस्य बाहुमूलगतस्य भुजान्यो दृढं नापीडयत्तस्मिन्वालिवानरेयं बाणो दुस्सहज-(। 6)वस्सन्सप्तभुवनजयस्तम्भसमान्सप्त तालान्भित्वा पतितः. हैहयावष्टब्धस्य रावणस्य संबन्धनेन(। 7) किं फलमिति सव्रीडत्वम् ॥ 70.

शैलेषुष्विन्दशमुखभुजस्तम्भसंस्तम्भनार्हे
दृष्टे पुत्रे भुवि निप(। 8)तिते नाकमेरोद्गते च.

---

1 Add प्रति 2 Ms has प्र रा. वि. on margin. 3 Ms. °दयाकद्य°. 4 Ms. हे°.
5 Ms भुजा°.

वार्ष्पैरशोकप्रमदरसयोर्यौगपद्यप्रवृत्तै-
स्साहस्राक्षैरिव वनजलै(1 9)र्विव्यथे रामभद्रः ॥

अस्मिन्पर्वते मेघाम्भोभिः रामो व्यथित.. अत्रोत्प्रेक्ष्यते साहस्राक्षै-
रिन्द्रसंव(1 10)न्धिभिर्बाष्पैरिव . कीदृशैश्शोकानन्दयोस्सहावस्थानेन प्रवृत्तै..
हर्षशोकयौगपद्यहेतुमाह पुत्रे वा(1 11)लिनि हते स्वर्गं च प्राप्ते दृष्टे सति .
पुनस्य वधाच्छोक. स्वर्गप्राप्त्या हर्षः रावणभुजस्तंभनयोग्ये . साह(1 12)-
स्राक्षैरिति साभिप्रायम् . सीताविरहाद्रामोऽत्यर्थं रुरोदेत्यर्थ. ॥ 71.

श्रुत्वा भ्रातुरमर्त्यलोकगमनं(1 13) तत्कालसंपातिना
वार्ष्पौघेण निदर्शितार्णवपथस्संपातिना मारुतिः .
लङ्कामेत्य तथा व्यचे(1 14)ष्टत यथा स्वस्मै च पित्रे पितु-
र्मित्राय स्पृहयालुतां च मरुते निन्ये पडाशां[प]तीन् ॥

भ्रातु (1 15) जटायोस्स्वर्गगमनं श्रुत्वा तत्काल पतता वाष्पप्रवाहेणेव
हेतुना कर्तृभूतेन सम्पातिना पक्षिणा(1 16) निदर्शितसमुद्रमार्गस्सन्मारुति-
र्हनुमांल्लङ्का प्राप्य व्यचेष्टत तथा शक्तिमदर्शयद्यथा स्वस्मै(1 17) पित्रे पव-
नाय पितुर्मित्रायाग्नये च षट्लोकपालान्स्पृहयालुतां श्रद्धालुत्वमनयत् . यत्पुत्रो
लङ्का(1 18)दाहकस्स वायुर्धन्यो यन्मित्रपुत्रोयं हनुमान्स चाग्निर्धन्य इति
लोकपाला. स्तुतिं चक्रुरित्यर्थ. ॥(1 19) 72.

दत्वा देव्यै रामभद्राङ्गुलीयं
तद्दत्तं च प्रत्यभिज्ञानरत्नम् .
लङ्कादाहं स्वैर्यपूर्वैर्गुणाणं
पा(1 20)र्णा पत्युस्सत्यसन्धो निधत्ते ॥

अभिज्ञानं रामाङ्गुलीयं सीतायै दत्वा स्वरश्मिभिर्लङ्कादा[हं क]ध-

1 Ms. °पै रि°. 2 Ms °न्भि 3 Ms °र्भि° 4 Ms °न° le. under l 11
5 Ms. ष° 6 Ms °पो°. 7 Ms °रु. 8 Ms °दग्°. 9 Ms °ज्ञ°. 10 Ms रिन्दे

(l.21)यन्तमिव सीतासंबन्धिनं प्रत्यभिज्ञानमणिं सत्यसन्धो हनूमान्रामस्य हस्ते न्यस्यति ॥ 73.

———(l.22)गयसंस्कारकुमारब्रह्मचारिणः .
अमी कपिशिताकाशाः पिबंत्याशाः प्लवङ्गमाः ॥

··········(l 23*)जा ब्रह्मचारिणः निस्संख्या इत्यर्थः कपिशितमाकाशं यैस्ते वान(l 1)[राः]·········· ॥ 74.

——[रत्ना]करत्वं निबिडयति तटाघातसातत्यहेला-
खेलन्मातङ्गनक्राहत(l.2)[गिरिशकलारब्धमाणिक्यवर्षः].
[अ]म्भोधेर्देवसेतुर्जलधरकरणिं गृह्णतो यस्य पार्श्वे
विद्युज्ज्वालायमा(l.3)नैर्ज्वलितमिदमितश्चामुतश्च प्लवङ्गैः ॥

तटाघातेषु सातत्येन नित्यं हेलया निखिलाभिं (?)र्मातङ्गन(l.4)क्रैराहता ये गिरिशकलास्तैरारब्धं माणिक्यवर्षं यस्य स देवसेतुर्जलनिधे रत्नाकरत्वं करोति . से(l.5)तुशैलरत्नैरेव रत्नाकरस्समुद्रो जात इत्यर्थः यस्य मेघसाम्यं दधतो निकटे इतश्चामुतश्च विद्युत्स(l.6)मैर्वानरैरिदं ज्वलितम् ॥ 75.

एतान्पश्य निशाचरेन्द्रनगरीचामीकराट्टालक-
गुत्युत्कर्षदुरीह्यदुस्स(l.7)हसहोवैश्वानरान्वानरान्.
एषामेव शिरोभिरेभिरभितो रुद्धान्तरः प्रस्तुत
प्राकारः कपिशीर्षपं(l 8)क्तिरचनारिक्तोयमाभासते ॥

लङ्काप्राकारहेमाट्टालकदीप्तिभिरुत्कर्षेणाधिकं दुरीह्यो दुस्स(l.9)हस्तेजोभिर्येषां तान्सहसा वैश्वानरानिति वारोपः . एषां वानराणामेव शिरोभिर्निरुद्धमध्यो(l 10)यं प्राकारः कपिशीर्षपंक्तिसंज्ञया रचनयातिरिक्त आभासते.

---

1 Ms न्यस्त°. 2 Ms. °निगृ°. Is it सार्विगृ ? 3 Ms. °मानग°. 4 Sic. Read °या रेराद्रिर्मा°. 5 Ms. °भिते°.

श्यामुखे प्रतिभासते हेमवप्रे कपि(1 11)शीर्षपङ्क्तिरपि वाहुल्यात्र विभाव्यते इत्यर्थ ॥ 76

व्यतिकरितहरितपिशङ्गरक्तःकपिकलयोधकबन्धताण्डवेयम् .
असुलभसुरसुन्दरीविमाना रघुपतिरावणसपरायगोष्ठी ॥

हरिता का(1 13)लाना रक्षसा पिशङ्गाना कपीना च कवन्धताण्डव व्यतिकरित मिलित यस्या सा तथा दु(1 14)र्लभाप्सरोविमाना बहूना वीराणा मारणादिति भाव रामरावणगोष्ठीय भवति ॥ 77

राममेव(1 15) किल शेषशायिनं शेषमेव च विचिन्त्य लक्ष्मणम् .
गाढता ध्रुवमिद न शिश्रिये मेघनादभुज(1 16)गास्त्रबन्धनम् ॥

राम विष्णु शेषे शयान लक्ष्मण शेषमेव चिन्तयित्वा मेघनादकृत सर्पास्त्रवध(1 17)न गाढता नाश्रयत्. अहीन्द्रेणाराध्यस्याहिपतेश्च कथ वय वन्धन कुर्म इति चिन्तयित्वेव सर्पास्त्र(1 18)बन्धन सद्यो विगतम् इत्यर्थ ॥ 78

ज्येष्ठानुवर्तनरसे कथमेतदीये
भाव्य मयेति तमिवाखिलमुज्झि(1 19)द्वीपुः .
शक्तिं न्यधाद्दशमुखो हृदि लक्ष्मणस्य
वेगादथ पवनभूः प्रतिहन्ति ता च ॥

एतदीये ल(1 20)क्ष्मणसम्बन्धिनि ज्येष्ठानुवर्तनरसे रामभक्तिरसे सति मया कथ भाव्य जीवनीयमित्यतस्त रामभक्ति(1 -1)[रसमु]द्धर्तुकाम इव रावणो लक्ष्मणहृदये शक्तिं न्यधात्तदा हनूमास्ता शक्तिं प्रति शल्योद्धरणा-(1 22) ॥ 79

[अर्धोद्धृ]तनगगिरिपीडितदोर्दलस्य
द्रोणाचले करगतेपि विलम्बिताङ्घ्रि .

1 Ms [illegible] 2 [illegible] 3 Ms [illegible] 4 Ms [illegible]

लंकापतेः कपिर(1.23)[यं हृदयं वभ]ञ्ज
पुत्रं पुनर्दशरथस्य सुतस्तृतीयः ॥

अर्धमुद्धृतेनेशगिरिणा कैलासेन पी(1.24**77¹)डितभुजवलस्य रावणस्य हृदयं हनुमान्द्रोणाद्रौ हस्तगेपि·········(1.1)पुत्रमिन्द्रजितं लक्ष्मणो भञ्जावंधीत् रावणः कैलासं किंचिदु······(1.2)हस्ते धारयित्वा समुद्रं र्गिर्ण इत्यनयोर्महदन्तरमित्यर्थः ॥ 80.

अ— ⏑ — ⏑ — ⏑ — ⏑ — ⏑ — ⏑ [धूं](1.3)मे
घ्राते चितादहनजन्मनि कुम्भकर्णः.
सुग्रीवनिष्फलविकर्तितकर्णनास-
— — ⏑ —[श्रयति विश्र](1.4)वसोभिधानम् ॥

इन्द्रजितं हतं श्रुत्वास्येन्द्रजिताश्रिताधूमे घ्राते सुग्रीवेण निष्फलं कृत्तकर्ण[नासो](1.5)पि एष कुम्भकर्णो विश्रवसः पितुर्नामाद्य धत्ते. अयमर्थः आदावेव यदि कुम्भकर्णस्य क[र्णौ नासां](1.6) च सुग्रीवोच्छेत्स्यत्तदा छेदः सफलोभविष्यत् कर्णयोरभावे सतीन्द्रजिन्मरणस्याश्रवणान्न[साया](1.7)अभावे धूमस्य घ्राणाभावात्. स्वपितृनामधारणं कर्णरहितत्वादिति भावः॥81.

रामशरकु[म्भ](1.8)सम्भवसंरम्भात्कुम्भकर्णविन्ध्यगिरिः.
शशितरणिसरणिरोधी न्यपतदसावपुनरुत्पतनः ॥

राम(1.9)शर एवागस्त्यस्तस्य संरम्भेण कुम्भकर्ण एव विन्ध्याद्रिश्चन्द्रार्कमार्गरोधी सन्नपुनरुत्थानः पतितः ॥ 82.

श(1.10)तकोटिकोटिशतमिव
हृतमिव जितस्य वज्रिणः.

---

1 Ms. has १. ग. प. on margin. 2 Ms. 'अव'. 3 Is it श्रुत्वेन्द्रजिदननमस्य तथा च धू'? 4 Ms. 'लक'. 'विकर्तित' added to suit metre and sense. 5 Ms. 'वशो'. 6 Ms. 'धान्. 7 Ms.'यमि'. 8. Ms. 'गस्त'. 9 Ms. 'मिष. 10 Ms. '[illegible]' lc. under I. II.

दर्शयति करगतं समरे
निशिताग्रपाणिज(l.11)मिषाद्दशाननः ॥

जितस्येन्द्रस्य हृतमिव वज्रधाराशतं रावणो[1] नखव्याजाद्धस्तगतं दर्शयति ॥(l.12), 83.

हिमकिरणकिरीटकुट्टिन-
स्ववदनवेदनया स्मृतिस्पृशा .
झटिति विघटितान्पितामह(l.13)-
स्समघटयत्प्रपितामहोऽस्य यान् ॥

हरेण लूनं यत्स्वमुखं तस्य व्यथया स्मर्यमाणयेव हेतु(l.14)भूतया यस्य प्रपितामहो ब्रह्मा यान्विघटितान्सततत्पूर्वं समघटयन्नयोजयत् ॥ 84.

तत्राद्यरघु(l.15)वीरकैतवशिरस्स्वच्छन्दसन्दर्शन-
क्रीडापञ्चमपातकप्रणयितामन्योयमायातवान् .
[तैः कृत्तैः] पुर(l.16)तो विदेहदुहितुस्संदर्शितैर्मूर्धभिः
प्रायश्चित्तमिदं चकार दशधा तात्कालिकं रावणः ॥

तै(l.17)र्दशभिश्शिरोभिः कृत्तैस्सीताया दर्शितै रावणो दशप्रकारं प्रायश्चित्तं समीकरोत् . प्रायश्चित्ते हेतु(l.18)माह स रामो तादृक्यासौ रघुवीरस्य रामस्य कैतवेन मायया शिरसि स्वच्छन्दस्स्वाच्छन्द्यं भेदस्तस्य(l.19) संदर्शनमेव क्रीडा सैव पंचमं पातकं तत्र प्रणयितां कर्तृत्वं प्राप्तवान् . अन्यत्र पातकी प्रायश्चित्तं करोति ॥.(l.20) 85.

कृत्तेषु मूर्धसु नवस्वपि रावणस्य
यावल्लुलाव दशमं वदनं न रामः .

1 Ms. °दन°. 2 Ms. °धरि°. 3 Ms. °न्या°. 4 Ms. प्रसादिद°.
5 Sic. 6 Ms. °रस°. 7 Sic. Is it °न्येन न°? 8 Ms. कर्तृ°.

श्रीस्तान तावदमुचद्दलि(।21)ते तु तस्मि-
स्तुल्यं व्यभज्यत मुखेषु दिशा पतीनाम् ॥

नवसख्येषु रावणस्य शि (।22)सत्सु यावन्न रामो दशम शिर-
श्छिन्नवास्तावन्तोऽशिरासि नात्यजत तस्मिन्द (।23*)
विभागेन गता अयमर्थ प्राग्वत्पुनरसधानशक्तित्वान्नवसख्य(।1) -
अस्ता ॥ 86.

पत्युर्देवरपुत्रयोश्च वटनैः कल्पान्तभानुप्रभे-
र्लकातोरणमा(।2)[लिका विरचिता दृष्णपि ता वानरै.?]
स्वःस्त्रैणैरपि श्रीत्तिताश्रुनयनैः कारागृहान्निर्गतैः
प्राणैर्वज्रमये(।3)रिय तदपि नो मन्दोदरी मुच्यते ॥

रावणस्य तथा देवरपुत्रयोश्च मुखैर्वानररचिता लङ्काया तो(4)रण-
माला मन्दोदरी यद्यप्यपश्यत्तथापि सा बन्धनिर्गतैश्शोकाश्रुपूर्णदृष्टिभिस्स्वर्ग-
वन्दीवृ(।5)-दैर्वीक्षितापि वज्रकठिनै प्राणैर्न वियुज्यते॑ अयमर्थ वन्धुसहि
तस्य भर्तुर्मरण पश्यन्त्या अपि(।6) मन्दोदर्या प्राणा न निर्यान्ति ॥ 87.

इयमपि रघुराजपुत्रपत्नी
कनकमयत्वमिवागता पुरैव
सम(।7)धिकसमवेतकान्तिरूपा
प्रमुषितमन्युमला निरोधि वह्नेः ॥

इयमपि सीताग्निमध्यान्निरे(।8)ति अत एव पुरैव परित्यागात्पूर्वमेव
सुवर्णमयत्वमिव प्राप्ता सीता त्यक्त्वा हि रामो हेममय्या(।9) सीतयैव प
त्न्या सह यज्ञानकरोत् अधिक जातकान्ति तथा प्रमुषितो निवारित
मन्युमलोपयशो य(।10)या ॥ 88

---

1 Ms दलिते 2 Ms र्नां 3 Ms मद्य 4 Ms मुञ्चत.
5 Ms पश्यन्त्या 6 Ms रव

लङ्कादाहप्रसङ्गप्रथमपरिचितेनामुना स्वामिभक्ति-
स्वस्सिन्धुस्नातकेन द्रुतमनिलभुवा(1 11) वन्दिताभ्यां पुरैव .
पद्भ्यां लङ्केन्द्रचूडामणिगुणितनखश्रेणिमाप्यं(?)त्रपाभ्यां
मातुर्निर्माय पापत्त्र(1 12)यमथ विदधे पुष्पकस्यात्र देवी ॥

युद्धात्पूर्वमेव लङ्कादाहप्रसंगपूर्वपरिचितेन रामभक्तिगङ्गायां स्नातकेन ह(1.13)नुमतैव प्रथमं वन्दिताभ्यां ततो विभीषणस्य मुकुटरत्नैः प्राप्ता नखसंपर्केण त्रपा ययोस्ताभ्यां . नखानां(1 14) रत्नाधिकद्युतित्वादिति भावः विभीषणेन प्रणताभ्यामित्यर्थः . पादाभ्या सीता पापत्त्रयं भूमे.(1 15) कृत्वा पुष्पकस्य पापत्त्रयमकरोत् . अयमर्थः रावणस्पर्शदोषाच्चयोर्यत्पापमासीत्तत्सीतापा(1 16)दस्पर्शेन शान्तम् ॥ 89.

आरूढे प्रसभापहारनिविडव्रीडाजडं राक्षसे
मन्दं मन्दमुवाह वा(1 17)हनमिदं दिव्यं धनस्वामिनः .
देवेनेदमधिष्ठितं तु गुरुतायोगेपि तल्लाघवं
धत्ते येन विभे(1 18)ति सोप्यचतुरंमन्यः खगानां पतिः ॥

रावणेन हठापहरणलज्जयेव जडं पुष्पकं रावणे(1 19) आरूढे सति मन्दं मन्दमवहत्तत्पुष्पकं रामेणाधिष्ठितं सद्गौरवे सत्यपि तल्लाघवं धारय(1 20)ति येन लाघवेन हेतुना गरु[डो] मन्दमात्मानं मन्यमानो भयं प्राप्नोति . अयमर्थः मन्दगामि(1 21)[नं मा] त्यक्त्वा नारायणः पुष्पकमेवारोहयतीति गरुडभयं . गौरवेपि लाघवमिति विरो(1 22)[धः] ॥ 90.

[सु]ग्रीवश्च विभीषणश्च कृतिना रामेण निष्कण्टकीकृत्याप्यर्पितया तथा न भजतो रा(1 23)[ज्यश्रिया] निर्वृतिम् .
लङ्काश्लेषणशीतलीकृतमनस्स्वामिप्रियाद्व्यया
दृष्ट्या भाग्यरता(1 24--78)मवति हनुमानात्मानमाद्यं यथा ॥

---

1 Ms. °नव°.     2 Sic Comm suggests °धिष्ठित° which would be bad metre.     3 Ms. lc. under l. 12.     4 Ms ग्रने.     5 Ms. °म्न°.     6 Ms गव°.     7 Sic. Is it °ग्रेव°?     8 Ms has ६. U. on margin.

सुग्रीवविभीषणौ रामे·········[य](l.1)था लङ्कादाहसुखितसीतादत्तया दृष्टया हनुमान्महाभाग्यवन्तमा··············(l.2)सीतादृष्टिरित्यर्थः ॥ 91.

मृडतनुरनुप्राणद्विश्वा भुजङ्गमजङ्ग[मा-
भरणभरणी शम्भोः(?) प्रिय](l.3)ङ्करणी दृशः .
अजनयदमुं कौमारेण क्रमेण ततोंकरो-
त्सुरहितकृत[ो विष्णोस्साहायकं कपिकेसरी?](l.4) .

अनुप्राणज्जीवज्जगद्विश्वं यया सा मृडस्य तनुरीश्वरमूर्तिर्वायुरूपा हरस्य भुजङ्गमा एव जङ्ग(l.5)मान्याभरणानि तेषां भरणी पोषिका हरस्य ललाटदृष्टयग्नेः प्रियंकरणी ज्वालाकरी हनुमन्तम(l.6)जनयत् अयं हनुमान्कौमारेण क्रमेण रामस्य विष्णोस्साहायकमकरोत् केसरी राजा ह···
···(l.7)न्कुमारः स्कन्दश्च दैत्यदलनाद्विष्णोरुपकारं कृतवान् . अयममुमित्यनयोर्मध्यादेकस्य पाठे······(l.8)रस्यार्थलभ्यत्वम् ॥ 92.

वैदेहीकिंवदन्त्या रघुपतिहृदयं लक्ष्मणस्याथ वक्ष-
स्संजीवन्या विशल्यं(l.9) विरचयितुमयं द्विः पयोराशिपारे.
यातायातं विधाताप्यधिवसति यतो विस्मयस्यानिभूमिं(l.10)
भूमौ(?)रंहो निरंहो वहति हनुमतस्संमतं तद्विमानम् ॥

सीतावृत्तान्तेन राम·········(l.11)जीवनौषध्या लक्ष्मणस्य च वक्षो विगतशल्यं कर्तुं द्वौ वारौ समुद्रस्य पारे गता[गतं]······[ह](l.12)नुमान्येनाश्चर्यस्यातिशयं प्राप्तः तद्धनुमतो मनोहरं निरंहो निष्पापं रंहो·········
(l.13) धारयति ॥ 93.

लङ्कायामपि चन्द्रशेखरधनुर्मौर्वीकिणश्यामिकां
क्रान्तां दाशरथे[र्भुजादिव मनो](l.14)राज्योपधानीकृतात् .

---

1 Ms. तताक°. 2 Ms. lc. mark before °क° but nothing is written on margin. 3 Ms. °जीवि°. 4 Ms. °जव°. 5 Ms. °रय°.

न्यस्तां पत्रलतां दधत्त्रिजटया काकुत्स्थकान्तामुखं,
पुष्यत्पुष्पक⏑–[भ्रकुह](1.15)रे श्वेतांशुतां शंसति ॥

काकुत्स्थस्य कान्तायास्सीताया मुखं कर्तृ श्वेतांशोश्चन्द्रस्य भावं शंस-[ति](1.16) पुष्पकमेवाभ्रकुहरं तस्मिन्पुष्यद्विकासितम् तथा लङ्कायामपि त्रिजटया राक्षस्या······(1.17)लितां पत्ररचनां दधत् अत्र संभाव्यते सीताया मनोराज्येपूपधानीकृताद्रामभुजादी(1.18)श्वरधनुर्गुणस्यामिकां संक्रान्ताम्. नेयं पत्रलता किं तर्हि मौर्वीकिणा इवेत्यर्थः ॥ 94.

एतस्मिन्द(1.19)भ्राभ्रे रघुतिलकयशोहंसवीतंसकल्पे
द्वैगुण्यं दृष्टसहस्रं भजति सुरपतेर्निर्भरत्वान्मु(1.20)देति,
पौलस्त्यस्य भपित्सोस्समरमरणतो देवभूयं शरौघै-
र्द्वैधाक्लृप्ताच्चिमार्गं नयति दिवम(1.21)यं मातलिर्वर्म दिव्यम् ॥

रामयश एव हंसस्तस्य चीतंसकल्पे भूषणसदृशे(1.22) तस्मिन्नावणे दृश्यमानेनं मुदा हर्षेणेन्द्रस्य दृष्टिसहस्रं द्वैगुण्यविकासं·········(1.23*) ······तस्य रावणस्य बाणवर्षैर्द्वेधा द्विसहस्रसंख्यः क्षिप्तोच्चिमार्गो(1.1) ········ ॥ 95.

तेजोव्ययं रचयितुं रजनीचराणां
रामाय यत्करसहस्रमिव स्वमर्कः.(1.2)
स्नेह⏑–⏑⏑⏑–⏑–नतथ
विभ्रद्रथो हरिसहस्रमनेन निन्ये ॥

रक्षसां तेजोहानिं कर्तुं सूर्यस्स्वं(1.3)रश्मिसहस्रं रामाय यद्विसृष्टवांस्त-द्वाजिसहस्रं धारयन्नथो मातलिना नीतः ॥ 96.

1 Ms. 'कुह'. 2 Ms. 'ष्य. 3 Is it लिखित'? 4 Ms. 'रोचे'. 5 Ms. कवस'. 'भूषण' crossed out. 6 Ms. रो इत्यर्थः crossed after 'रो. 7 Ms. ringed with a line. 8 Ms. 'स्त'. 9 Ms. 'रश—'सावित्रे struck out after 'र.

अ(l.4)यं नंदिग्रामस्सुकृतफलभूमिर्नयनयो-
र्जटाभारं यस्मिन्समभवनिभारेण भरतम् .
क्षिपंतं दृष्ट्वा(l.5)ग्रजचरणयोरानतमुखौ
समं जातावेतौ रजनिचरशाखामृगपती ॥

यत्र भूभारेण सह जटा(l.6)[भारं रामपा]दयोरुपरि क्षिपन्तं भरतं. राज्यं प्रत्यर्पयन्तमित्यर्थः . दृष्ट्वैव सुग्रीवविभीषणौ ए(l.7)तावधोमुखौ संपन्नौ . ताभ्यामग्रजयो रावणवालिनो राज्यहरणाल्लज्जेति[1] भावः . नेत्रयोः पुण्यफ(l.8)लस्सोयं नंदिग्रामः ॥ 97.

अयोध्येयं ध्येयं कथमपि विरिञ्चप्रभृतिभि-
र्जनास्सर्वे यस्यां त(l.9)[मपि नयना]तिथ्यमनयन् .
न यं दृष्ट्वा पारं न भवजलधेर्यांति पशवो
यतस्तं सेवित्वा कपिभि(l.10)[रपि तीर्णो] जलनिधिः ॥

यं दृष्ट्वा पशवोपि संसाराब्धिपारं लभन्ते तं विष्णुमपि ध्यातव्यं सर्वे ज(l.11)······तिथ्यमनयन्नपश्यन्नित्यर्थः सेयं अयोध्या भवति पशुप्राणानां हरिदर्श(l.12)········ वानरैरपि समुद्रस्तीर्णः ॥ 98.

निरशेषानुदधीन्नदीश्च निखिलास्तीर्था(l.13)[नि सर्वाणि च?]
भ्रान्त्वा वारिभिराहृतैर्जनकजाचारित्रमित्रैरमी .
विद्युत्वन्त इवाम्बुदाः कपिचमूमिश्रा(l.14)[स्त्रिया]माचरा-
श्चक्रुः कारणमानुषस्य जलधिक्रीडानिवासस्मृतिम् ॥

विद्युत्सहिता मेघा इ(l.15)व वानरसहिता राक्षसा हेतुमानुषस्य रामरूपस्य विष्णोस्समुद्रलीलागृहस्मरणं चक्रुः स(l.16)मुद्रादीन्गत्वानीतैर्जलैः अयमर्थः राज्याभिषेकार्थं तावन्तः कलशाः क्षिप्ता यावद्भिस्तस्य स(l.17)-मुद्रस्मरणं जातम् ॥ 99.

---

1 Ms °जेति 2 Ms. °तिमप्यनयन् 3 Ms. °आनेवे°. 1 Ms. हेतुमाद crossed before वा°. 5 Ms. °त्रिश°. 6 Ms. तानक°.

आ देवाद्दिवसेश्वराद्दशरथं यावत्सदेश्ये कुले
सर्वस्मिन्ननरण्यमन्युश(18)मने प्रस्ताविते नाटके
स्वत्र स्वत्र महर्षिरेष भरतः पात्रक्रमे मेनका-
मुख्यानाममरावतीमृग(19)दृशा शिक्षागुरुर्लक्ष्यते ॥

सूर्यात्प्रभृति दशरथ यावत्समानदेशे कुले आकाशस्थिते इत्यर्थ (20) अनरण्यहन्तुर्दशासनस्य वधावनरण्यमन्युशमननाम्नि नाटके आरब्धे सति *मेनकादीनामप्सर(21)[सा स्व]स्मिन्स्वस्मिन्पात्रक्रमे भूमिकारम्भे शिक्षा-*गुरुरेषं लक्ष्यते ॥ 100.

सेयं देव तिलोत्तमा स्व(22)⏑ ⏑ — — — चमायातयचा(?)-
वेतावायतनारविन्दमुकुलौ लावण्यरूपश्रियोः .
अस्थानाभि(23**79)निवेशतां न दधतुः सुन्दोपसुन्दौ ⏑ —
स्पृष्टौ तद्यशसोरनाम ⏑ ⏑ — — — ⏑ — — ⏑ — ॥

··(1)न्दयोस्सन्निधिनोर्यशसो राम णार्थं अकटावमृतघटा-
·· · · · (2)त्त. स्तनयोस्सौन्दर्यात्सुन्दोपसुन्दयोस्तिलोत्तमायामनु-
रागो नास्था[ने] (3)धिका तिलोत्तमा ॥ 101.

अस्याः पश्य विदेहराजतनयानेपथ्यलीलायित-
स्व — ⏑ ⏑ — ⏑ — ⏑ — ⏑ — (4)ह्लादं रघुस्वामिनः .
एतस्यां निभृते दृशौ विनिहिते स्मृत्वोज्झितानीतया
देव्या सेर्ष्यतया यथेषं न [पुनः](5) स्पृष्टो विशन्त्या भुवम् ॥

तिलोत्तमायास्सीतारूपाभिनयो रामस्य चित्तं तथा रञ्जयति यथेर्ष्या-वशा(6)दिव भूमिं प्रविशन्त्या रामेण न्यस्तां दृष्टिं स्मृत्वा त्यक्तानीत-यापि सीतया राम पुनर्न स्पृष्ट ॥ 102.

---

1 Ms 'रवे'  2 Ms 'म [ु]' ... under l. 20  3 ... 'म्न'.
4 Is it 'ग्ना ...'?  5 Ms has ... on margin  6 Ms '...'.
7 Ms 'नेव'.  8 Is it '... ...'?  9 Ms देव.

आव(। 7)जितो जनकराजसुताभिनीत्या
नून तथायमनयाप्सरसात्र देवः
वाञ्छन्त्यरोचकितया(7) वरमेतमेव
ज(। 8)न्मान्तरेष्वपि यथा स्ववश विधाता ॥

सीतारूपाभिनयेन तिलोत्तमया रामस्तथा वशीकृतो यथा(। 9)रोचकितयान्यस्मिन्नभिलापाभावात्सा जन्मान्तरेष्वपि तमेव भर्तारं वाञ्छन्ती तमेव स्ववश नय (। 10)पि स्ववशं करिष्यति इत्यर्थ ॥ 103

स्वरचितमिति प्राज्य चित्तस्थित पृथिवीभटे
भणति पृथिवीरा[जो जातो](। 11) मुहुर्मुहुरुन्मनाः .
नयनविषय याता चित्राकृतिस्तु तिलोत्तमा
तमपि विदधे चित्रन्यस्त⏑ — ⏑(। 12)विलोकिताम् ॥

पूर्वजन्मचरित्र पृथिवीभटे वर्णयति सति राजोत्कण्ठितो जात चित्रे स्थित[ा दृष्टा](। 13)तिलोत्तमा राजानमपि चित्रस्थितमिव चक्रे अतस्सभाव्यते एकत्वमिव राजानं नेतु(। 14)मिच्छु अत्यनुरागाद्धि द्वयोरेकत्व भवति ॥ 104.

चक्रे राज्याश्रमपदमुनेस्सन्निधानेस्य सत्वै
वरत्यागस्त्वय(। 15)मिति दिशः कित्रदन्त्या भ्रमन्त्या .
यस्मिञ्जन्मप्रभृति भगवान्सन्निधत्ते [स्मरारि]
स्स्थातु वाञ्छामकृत हृद(। 16)ये तत्र तस्य स्मरोपि ॥

राज्यमेवाश्रमपद तत्र मुने राजर्षे पृथ्वीराजस्य सन्निधाने सत्वै प्राणि(। 17)भिर्वरत्याग कृत इति वार्तया भ्रमन्त्या हेतुभूतया यत्र चेतसि स्मरारिस्सन्निहित स्मरोपि तत्र चेत(। 18)सि स्थातु सन्निधानमकरोत्

---

1 Ms नत 2 Ms मत 3 Ms यद्याच क (?) 4 Ms cross mark above न्य 5 Ms स्वय स cross ma k above स 6 Ms Read स्वचरित 7 Ms भटो 8 Ms चित्त 9 Ms Is it निनागुरिवेत्तम् ? 10 Ms मेर 11 Ms रेरगाद 12 Ms सक

पूर्वोक्तस्य श्लोकस्य हेतुमतोयं श्लोको हेतुत्वेन व्याख्येय इति भद्रम् ॥
(1.19), 105.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ विश्रम्य रम्य(1.20)श्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शाखच्चोदसखेद[मेदु]रमतिर्ज्योत्स्ना(1.21)भिधो लावणिः ॥.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स जो[नराजः] .
[स](1.22)र्गं दशान्त्यमकरोत्सुरमत्र पृथ्वी-
राजाख्यराजविजयाभिधकाव्यराजे ॥[1]

1 Ms. ॥ ९······(1,23a).

## [ द्वादशः सर्गः ]

⏑⏑–⏑⏑–⏑–⏑–

[निपुणध्यानफ]लेँ विलोचने .
नृपतेः [सम]योपयोगिनं
द्विगुणीभावमिवाधि[जग्मतुः] ॥(1.1)

…………निपुणं कृत्वा ध्यानमेव फलं ययोस्ते नेत्रे तत्कालोपयोग्यं द्वै…………(1.2)…. ……कामित्वादिति भावः ॥ 1.

अमृतमपया तया दृशो-
र्विषयं भू(1.3)मिपतेः प्रयातया .
यदियाय रुचिर्न मन्दता-
मनुकूलो विविदे विधिस्ततः ॥

हर्षकारित्वाद(1.4)मृतपुष्करिण्या विलोत्तमया राज्ञो नेत्रविषयमागतया रुचिर्मन्दतां यन्न गता दर्शनतृप्तिर्नाभू(1.5)दित्यर्थः ॥ 2.

नयने श्रवणे मनश्च य-
त्समभेव व्यक्तसन्महीभुजः .
विपुलीकृतलक्ष्यपञ्चक-
रसुकृतो(1.6) पंचशरस्ततोभवत् ॥

राज्ञो दृशौ कर्णौ मनश्च युगपदेव यद्विचकासे ततो हेतोः पञ्च लक्ष्याणि(1.7) गोचरीकुर्वन्पञ्चशरस्सुष्ठु कृतकृत्योभवत् . पंचानां शराणां युगपल्लक्ष्यपंचकप्राप्तेः ॥ 3.

---

1 Ms °लो. 2 Ms °पने. 3 Ms. चन्द्र°. 4 Ms. °स्मृत°. 5 Incomplete 6 Ms.°वयो. 7 Sic. Is it सफलो°? or, better, विषयां°?, 8 Sic! 9 Ms. °पृ.

प्रविवेश(1 5) [विनिर्य]यौ च य-
स्रयनाग्निर्मदनः पिनाकिनः.
नृपतिं प्रबलप्रतापम-
प्युपसर्पन्नत एव नात्रसत् ॥

ह(1 9)रस्य नेत्राग्निं कामः प्राविशन्नेत्राग्नेश्च निर्गतस्ततो महाप्रता-
पमपि राजानं प्रवि(1 10)शन्नात्रसत्. अग्निं सेवमानस्य तापत्रासाभा-
वात् ॥

मिलितभ्रमरालिकालिकं
बहुभेदैः कुसुमैः(1 11) कृतं धनुः.
स्वकरादिव जिष्णुनार्पितं
क्षितिजिष्णोर्विजिगीषया वहन् ॥

मिलितेत्यारभ्योपकं(1.12)सुमित्यन्तं कामवर्णनपरं कुलकम् ॥

भ्रमरालिरेव कालिका मेघपंक्तिरपि मिलिता यत्र त(1 13)था वर्णवै-
चित्र्याद्बहुभेदैः पुष्पैः कृतं धनुर्दधत् अतस्संभाव्यते क्षितिजिष्णो राज्ञो
विजिगीषया(1 14) हेतुभूतया इन्द्रेण स्वहस्तादिव दत्तम् वद्धि मेघपंक्तिसहितं
बहुफलं च भवति. क्षितिजिष्णोरि(1.15)ति साभिप्रायम् ॥ 5.

अलिपंक्तिमयं मुहुर्मुहु-
र्मकरन्दाङ्कितमास्पृशन्गुणम्.
विरलाग्निशि(1 16)खाधिवासितं-
प्रतिपक्षेक्षणधूमधूसरम् ॥

भ्रमरमालामयं रजोयुक्तं गुणं पुनः पुनस्स्पृशन् अल्पाभि(1 17)रग्नि-
ज्वालाभिस्सहितो यः प्रतिपक्षस्य हरस्य नेत्रधूमस्तेन धूसरम् ॥ 6.

---

1 Ms. °र्देमन° 2 Is it °र्यंच°? 3 Ms. तेजःप्रतापमपि crossed after °न. 4 Ms °भ्रात्रस°. 5 See verse 8, below. 6 Ms. °सिताग्र°. 7 Ms. °यत्र°.

त्रिदिवोपवने फलन्ति(1 18) ये
तरवः पञ्च यथामनीषितम् .
स्वयमेव समर्पितं नय-
नृजुतां तैः कुसुमेषुपञ्चकम् ॥

ये(1.19) नाके वृक्षाः प्रार्थितं ददति तैरिव पुष्पशरपञ्चकं दत्तं ऋजुतां नयम् ॥ 7.

उपकर्तुमुपेतमप्युमा(1 20)-
मुपनीयाज्वलयद्य एव माम् .
तमसौ वरिवस्यतीत्यभू-
न्मदनो योद्धुमनाः क्षमाभुजम् ॥(1 21)

·········द्योपकर्तुं प्राप्तमपि मां योदहदेव तं हरमसौ राजा सेवत इतीव राजानं प्रहर्तुका(1.22)[म इव कामोभू]त्. योद्धुमना इति पाठ आर्षः॥ 8.

रजसा कपिशा दिशो बभूवु-
र्धनुराकर्षति कौसुमं(1.23) [मनोजे].
[व]निता इव पत्युरप्सरो-
विषयां वीक्ष्य हठप्रतारणाम् ॥

कामे पुष्पचापं कर्षति र(1 24**30)जसा कपिशा दिशो बभूवुः निजस्य पत्युः पृथ्वीराजस्य तिलोत्तमा···············(1.1) 9.

शरगोचरतामनीतयो-
र्नियतं शिक्षितमस्त्रविद्यया .
पुरतो गुह[रामयो]⏑—
⏑⏑—⏑⏑—⏑—⏑— ॥(1 2)

---

1 Which is the अनार्ष reading ? 2 Ms. °क्षता 3 Ms °पयाती°. 4 Ms. °रयम्. 5 Ms. °विर°. 6 Ms. has पृ. रा. वा. on margin.

ब्रह्मचारित्वात्कामेन शरविषयभावं न नीतयोः कुमाररामयोरग्रे कौ-
·· ············(13)रोपि भूभृतं पर्वतमपि भिन्नवान्. यौ हि क्रौञ्चा-
द्रिं विभिदतुः ॥ शिक्षितयास्त्रविषये(15)ति पाठस्समीचीनः ॥ 10.

कमलासहजद्रुमाग्रजै-
स्सुधया(14) हालहलेन चोज्झितैः .
कुसुमास्त्रशरैर्वशं ययौ
सममानन्दविमोहयोर्नृपः ॥ 11.

चतुरश्चतुरश्शरानर्था-
दसमास्त्रः परिवर्ज्य मारणम्.
हृदि तस्य ततस्तिलोत्त(16)मा
सचतुर्द्वार इव न्यविक्षत ॥

चतुर आशुकारी कामो मारणनामानं शरं वर्जयित्वा चतुरश्शरान्या-
न्नि(17)हितवांस्ततश्चतुर्द्वारसहितेव चेतसि तिलोत्तमा प्रविष्टा ॥ 12.

तेषां चतुर्णां शराणां कर्माण्याह ॥(18)

समभुद्यदवाधि निद्रया
समतापि प्रललाप चापदे .
इति तस्य चतुर्दशे मनो-
भवने स्वाम्य[मवाप(19) साप्सराः?] ॥

राजा संमोहं प्राप्तवान्. निद्रया स बाधितः . राजातप्यत. राजा अ-
स्थाने च प्रलापं कृतवान्(110). एवं चतस्रो दशा यस्य तस्मिन्राज्ञो मनोगृहे
स्वाम्यमैश्वर्यं तिलोत्तमा प्रापत्. गृहं च चतुर्भूमिकं भव(111)ति ॥ 13.

1 Ms. This part of Comm is given after verse 11. 2 Ms. 'जस्तु'.
3 Ms. 'योर्नृ'. 4 Ms. No Comm on verse 11. 5 Ms. '-यथा'.

अणिमानमतिप्रसादिता-
द्द्युपतेर्जातुचिदाससाद सा .
मतिमम्बुजनालवद्यत-
स्शुचिसूक्ष्मां(1.12) प्रविवेश भूपतेः ॥

अतिसेविताविन्द्रात्सा तिलोत्तमा कदाचिदणुत्वं प्रसादं प्रापत् यतो हेतोर्मृणा(1.13)लसूत्रवच्छुचिं सूक्ष्मां मतिं राज्ञः प्रविष्टा. अणुरेव हि सूक्ष्मं प्रविशति. इन्द्रश्च मृणालनालं·········(1.14)अवंधे(?) प्राविशदित्यागमः ॥ 14.

सहजस्य तरोश्शरीकृतै-
र्हृदि रुद्धे कुसुमैर्मनोभुवा .
मुमुदे मुखदेव(1.15)ता रमा
नृपतेश्श्वाससमीरसौरभैः ॥

लक्ष्म्यास्सहजस्य तरोः पारिजातस्य पुष्पैश्शरीकृतैः कामेन रु(1.16)द्धे सति हृदि राज्ञो निश्वाससौगन्ध्यैर्मुखदेवता लक्ष्मीर्मुमुदे तुष्टा ॥ 15.

अमरत्वमु‒⏑‒‒⏑र°(1.17)
प्रविशन्त्येव हृदि द्युयोषिता .
नृपतेर्ह्यनिमेषतां दृशा-
वतिमात्रं बिभरांबभूवतुः ॥

·········[प्रवि](1.18)शन्त्या सुरस्त्रिया देवत्वमिवोपायनीकृतम् यस्माद्राज्ञो दृशौ निर्निमेषभावमवहता[म्. देवा हि निर्नि](1.19)मेषाः ॥ 16.

द्युवधूपरिरम्भसाक्षिणः
प्रथमे स्तो वयमेव भूभुजः .

1 Ms. °दम. 2 Is it कृते वृत्रवधे प्रा°? 3 Ms. रसा. 4 Ms. °दमा°.
5 Is it °त्वमुपायनीकृत°. 6 Ms. °मेस्सौ.

इति नूनमहर्पि रोमभि-
र्मेक(120)राङ्काशुगपक्षवात्यया ॥

ध्याधास्तिलोत्तमालिङ्गनसाक्षिणो वयमेव स्मो भवामः इत्यतो हेतो-र्नू(121)नं रोमभिरहर्पि हृपितम् . अत्र हेत्वन्तरं संभाव्यते . कामशरपक्षवातैः . साक्षिण इत्यारोपः वि(122)शेषणेन नपुंसकता स्यात् ॥ 17.

कतिचिन्नपतन्कणास्ततो
नयनाभ्याममृतं न्यपायि यत् .
⏑ ⏑ — ⏑ ⏑ —(123*) ⏑ — ⏑ —
⏑ ⏑ — — ⏑ ⏑ [घर्मविन्द]वः ॥

राज्ञा तिलोत्तमादर्शनामृतं यत्पीतं ततः कणा एव··········(1.1)
···········[न]एडयोर्मध्ये घर्मकणाः पतिताः . नामी घर्मकणाः किन्तु पीतस्य(1.2) तिलोत्तमामृतस्य कणा एवेत्यर्थः ॥ 18.

ददृशेऽङ्कमिवाधिरोपिता
पुलकाङ्केन मुखेन तस्य सा .
हरिणं(13) शशिमत्सरादिव
मगुणैर्गीतगुणैर्जिघृक्षया ॥

कामवशाद्भूतार्थदर्शिना तस्य रोमाञ्चितेन मु(14)खेनाङ्कमिवाधिरोपिता जनेन ददृशे संभाविता . अङ्काधिरोपणे हेतुमाह . तिलोत्तमासंबन्धिभिर्गीतगुणैर्हे(15)तुभिर्हरि[णं गृही]तुकामेनेव चन्द्रमत्सरात् हरिणान्यनार्थमिवाङ्कं तिलोत्तमारोपितेत्यर्थः ॥(16) 19.

परिरक्षितव[र्ण]संस्थिति
नृपमेतावति मण्डले भुवः .

---

1 Ms. °वस्थो. 2 Ms. °वत°. 3 Ms. °न्[illegible]°. 4 Ms. °नेत्[illegible]°. 5 Ms °अनेन lc. under l. 4. 6 Ms. [illegible] lc. under l. 5 7 Ms. °[illegible]°. 8 Ms. °[illegible]°.

अपदेगमयद्विवर्णतां
प्रथमो विप्लवका(17)रिणां स्मरः ॥

परिरक्षिता वर्णानां ब्राह्मणादीनां संस्थितिर्येन तं राजानमुपद्रवकारिणामाद्यः कामो वि(18)भिन्नो वर्णो मुखरागो यस्य तद्भावमपदेगमयत्. वर्णरक्षितुर्वर्णनाशनमनुचितमित्यर्थः ॥ 20.

पदमै(19)न्द्रमुपेत्य दर्शित-
स्सकलेस्मिन्नवनीतले पुरा .
त्रिदिवप्रमदानुरागिणा
स्वरभेदश्चरमन्तु जल्पिते ॥(110)

ऐन्द्रं पदं प्राप्य राज्ञा भूतले स्वरभेदः स्वर्गाभेदः प्रथमं भूतले दर्शितः चरमं पश्चाज्जल्पिते(111) कथासु स्वरभेदस्वरसादो राज्ञा तिलोत्तमानुरक्तेन दर्शितः ॥ 21.

अयमेष्यति दिव्यमूर्त्तिता-
मनुर(112)क्तस्त्रिदिवाङ्गनां प्रति .
इति भूरमणस्य मानुषी
प्रचकम्पे तनुरौपचारिकी ॥

तिलोत्तमाया(113)मनुरक्तोयं मानुषीं मूर्त्तिं त्यक्त्वा दिव्यां मूर्त्तिं पुनर्महीष्यतीतीव राज्ञ औपचारिकी कार्यसिद्ध्य(114)र्थमभिनीता मानुषी तनुः कम्पते स्म ॥ 22.

अविलम्बितमीयुरुष्णतां
शिशिराः प्राक्प्रमदाश्रुशीकराः .(115)
⏑⏑–⏑⏑–⏑–⏑–
शशिनस्स्थान इव त्विषा रवेः ॥

---

1 Ms. 'र्थमु'. 2 Ms. 'रा श्री'. 3 Ms. 'र: म'.

प्रथमं तद्दर्शनजाता हर्षबाष्पकणास्तूर्ण(1 16)[मुष्णत्वं] गृहीतुमैच्छन् अतरसंभाव्यते चन्द्रस्य स्थाने कामेन धृतस्य रवेस्त्विषेव तापिताः कामेन च(1.17)न्द्रो रोजसन्तापनार्थं सूर्यः कृतः तद्दीप्त्यैवोष्ण इत्यर्थः ॥ 23.

हृदये लिखितां पुरः स्थिता-
दपि चित्राद्रु(1.18)चिरां ददर्श यत् ।
अविदत्परमार्थतस्तत-
स्स मनोराज्यमनोतिशायिनीम् ॥

अग्रस्थाचित्रादप्यति(1 19)रुचिरां हृदि लिखितां तां राजा यद्दृष्टवांस्ततो हेतो राजैनां मनोराज्येषु मनसा तिलोत्तमाभोगे(1 20)ष्वतिशायिनीं परमार्थतो जायामविदत् । उत्तरोत्तरमाधिक्यदर्शनात्कृपाधिक्यमनुचितमित्यर्थः(?).(1 21) [अ]विददिति चिन्त्यम् ॥ 24.

विकसन्मदने हरेः पदे
सुमनश्चिन्तितकल्पपादपे ।
इति नित्यविकस्व(1 22)[रेवस]-
न्निदिवोद्यान इवास्य सा हृदि ॥

विकसन्मदनः कामो वृक्षविशेषश्च यत्र तथा हरेर्विष्णो(1 23**81*)-रिन्द्रस्य च स्थाने सुमनसां सज्जन[नां] चिन्तितेषु कल्पपादपे[षु]···
·········(1.1) नित्यविकसिते नन्दनवन इव तस्य चित्ते सावसत् ॥ 25.

स ⏑–⏑ ⏑–⏑–
⏑–⏑–⏑–(1 2)प्रदोत् ।
अनुरागरसच्युतोपि य-
न्निचितः सात्त्विकभावसंप[दा] ॥

1 Ms. °त्ण°. 2 Ms. °रिष°. 3 Ms. °पृश°. 4 Ms. °नं. 5 Ms. °कृ°. 6 Ms. ष-ष. on margin. 7 Ms. °नं.

······ ·······(l 3)नित्याभ्यां सफलं वत्प्रापत्. यत्सात्विकभावानां कम्पस्वेदादीनां·············[संपत्](l 4)तितोपि मिलितः ॥ 26.

उदभिद्यत घर्मविन्दुभिः
प्रथमं चित्रकरस्य [कौशलात्?].
⏑⏑–⏑⏑⏑–⏑–⏑⏑–(l 5)
रनु मध्यन्दिनदुन्दुभिध्वनिः ॥

चित्रकरस्य रवेरालेख्यकृतश्च कौ · ·· ·······(l 6) 27.

[Lines 7,8 missing]

शेषं नयने न्यमज्जयत् ॥

चित्रमण्डपे पटहशब्दस्यानुवादिनि संप्रति शब्द इत्य············ (l 9)तसरासि दृशो निमग्ने मध्याह्नविध्यनुष्ठानार्थमवश्यगमनेन दर्शनविघ्नसंभावन·········(l 10) 28.

अननन्धमवेक्ष्य तादृशं
क्षितिभर्तुस्सुरसुन्दरीं प्रति.
गणयन्नपराधमात्मनो
मनसीत्थं पृ[थिवीभ](l 11)दोभ्यंधात् ॥ 29.

उपमानपदे तिलोत्तमां
यदि मन्त्री विदधे श्रियं प्रति.
अपरीक्ष्य पुनस्तदीदृशं
कथम(l.12)र्थ तदनूदितं मया ॥

लक्ष्मीं प्रत्युपमानत्वे कदम्बवासस्तिलोत्तमां यदि विदधे तत्तदीदृशमर्थम(l 13)विमृश्य तदेव मया कथमनुकथितम्. तिलोत्तमाकथैव कथमारब्धेत्यर्थः ॥ 30.

---

1 Ms °का°. 2 Ms °दान्°. 3 Ms No Comm 4 Ms °नृषि°.
5 Ms °र्नम°. Ic. mark before °म° but nothing on margin

इदमीदृगनर्थसंश(114)यं
कथमालेख्यगृहं च दर्शितम् .
अनयन्मदनः शरव्यतां
विशतो यत्र महीपतेर्मनः ॥

ईदृगीदृ(115)शोनर्थविषयसंशयो यत्र तच्चित्रगृहं कथं मया दर्शितम् यत्र विशतो राज्ञश्चित्तं लक्ष्यतां कामो(116)नयत् चित्तमभिनदित्यर्थः ॥31.

क ललाम तिलोत्तमा दिवः
प्रभुता च क मनुष्यमण्डले .
⏑⏑–' (117)पुरुषस्य नेदृशी
घटनेयं पुरुषोत्तमं विना ॥

दिवो ललाम भूषणं तिलोत्तमा क भवति [मनुष्यमण्ड](118)ले ऐश्वर्यं क भवति पुरुषोत्तमं विष्णुं विना पुरुषस्य नेदृशी घटना भवति ॥32.

इयंती⏑⏑–⏑(119)मानसीं
रुजमाशा मम हन्तुमीश्वरी .
अभवत्र कदम्बवासवा-
न्नृपतेः कचि[दनर्थकारिणी?] ॥

[म](120)म मानसीं रुजं चिन्तां हन्तुं सेयमाशा परं केवलमीश्वरी समर्था भवति यत्कदम्ब············(121) राज्ञोनर्थकारिणी नाभूत् ॥ ·········· ॥ 33.

पुरतः पुरुहूतपत्तन-
प्रमदानाम स⏑⏑–⏑–'(122)
तदवश्यमितोपि सद्गुरा-
दयमेव द्रुतमुद्धरिष्यति ॥

---

1 Ms. 'म.    2 Is it ष्वचा ?    3 Ms. 'वनिरो'.    4 Ms. 'ठ.
5 Is it परमति ?    6 Is it ष च पन्धचार ?

············(l.3)नित्याभ्यां सफलं तत्प्राप्त्. यत्सात्त्विकभावानां कम्पस्वेदादीनां············[संपत्](l.4)तितोपि मिलितः ॥   26.

उदभिद्यत घर्मबिन्दुभिः
प्रथमं चित्रकरस्य [कौशलात्?].
◡ ◡ — ◡ ◡ — ◡ — ◡ —(l.5)
रनु मध्यन्दिनदुन्दुभिध्वनिः ॥

चित्रकरस्य रवेरालेख्यकृतश्च कौ············(l.6)   27.

[Lines 7,8 missing]

शेषं नयने न्यमज्जयत् ॥

चित्रमण्डपे पटहशब्दस्यानुवादिनि संप्रति शब्द इत्य············(l.9)तत्सरसि दृशो निमग्ने मध्याह्नविध्यनुष्ठानार्थमवश्यगमनेन दर्शनविघ्नसंभावन·········(l.10)   28.

अनुबन्धमवेक्ष्य तादृशं
क्षितिभर्तुस्सुरसुन्दरीं प्रति.
गणयन्नपराधमात्मनो
मनसीत्थं पृ[थिवीभ](l.11)टोभ्यधात् ॥   29.

उपमानपदे तिलोत्तमां
यदि मन्त्री विदधे श्रियं प्रति.
अपरीक्ष्य पुनस्तदीदृशं
कथम(l.12)र्थे तदनूदितं मया ॥

लक्ष्मीं प्रत्युपमानत्वे कदम्बवासस्तिलोत्तमां यदि विदधे तत्तदीदृशमर्थम(l.13)विमृश्य तदेव मया कथमनुकथितम्. तिलोत्तमाकथैव कथमारब्धेत्यर्थः ॥   30.

---

1 Ms. कार°.   2 Ms. °टोभ्°.   3 Ms. No Comm.   4 Ms. °नूदि°.
5 Ms. °र्थम°. ie. mark before °म°. but nothing on margin.

इदमीदृगनर्थसंश(1.14)यं
कथमालेख्यगृहं च दर्शितम् .
अनयन्मदनः शरव्यतां
विशतो यत्र महीपतेर्मनः ॥

ईदृगीदृ(1.15)शोनर्थविपयस्संशयो यत्र तच्चित्रगृहं कथं मया दर्शितम् यत्र विशतो राज्ञश्चित्तं लक्ष्यतां कामो(1.16)नयत् चित्तमभिनदित्यर्थः ॥31.

क ललाम तिलोत्तमा दिवः
प्रभुता च क मनुष्यमण्डले .
⏑ ⏑ –[1] (1.17)पुरुषस्य नेदृशी
घटनेयं पुरुषोत्तमं विना ॥

दिवो ललाम भूषणं तिलोत्तमा क भवति [मनुष्यमण्ड](1.18)ले ऐश्वर्यं क भवति पुरुषोत्तमं विष्णुं विना पुरुषस्य नेदृशी घटना भवति ॥32

इयंती ⏑ ⏑ – ⏑[2](1.19)मानसीं
रुजमाशा मम हन्तुमीश्वरी .
अभवन्न कदम्ववासवा-
न्नृपतेः काचि[दनर्थकारिणी?] ॥

[म](1.20)म मानसीं रुजं चिन्तां हन्तुं सेयमाशा परं केवलमीश्वरी समर्था भवति यत्कदम्ब············(1.21) राज्ञोनर्थकारिणी नाभूत् ॥
·········· ॥ 33.

पुरतः पुरुहूतपत्तन-
प्रमदानाम स ⏑ – ⏑ ⏑ –[6].(1.22)
तदवश्यमितोपि सङ्कटा-
दयमेव हृतमुद्धरिष्यति ॥

---

1 Ms. °त्र. 2 Is it चरवा ? 3 Ms. °मनीतो°. 4 Ms. °ती.
5 Is it परमस्ति ? 6 Is it ■ स्व चाभ्यधात् ?

स एव प्रथमं तिलोत्तमाना[म]············(123*)·········रिष्यति ॥ 34.

विदधात्ययमुत्तमं यदि
प्रभुभक्त्या पृथिवीबृहस्पतिः .(1.1)
⏑⏑–⏑⏑–[तिलोत्तमा
सदनं स्वामि]कृते प्रवेक्ष्यति ॥

पूर्वश्लोकार्थमेव प्रपञ्चयति . स्वामिभक्त्यायं(1.2)··············[तिलो]त्तमा स्वयमेव स्वामिकृते गृहमेष्यति ॥ 35.

नैतदाश्चर्यमित्याह ॥(1.3)

⏑⏑–⏑⏑–⏑–⏑–
⏑⏑––⏑कचं सुराङ्गना .
अजमिन्दुमतीमयेन वा
वपुषा किं हरिणी न शिश्रि(1.4)ये ॥

·················नाभ्यलपत् इन्दुमतीरूपेण हरिणीनाम्नी नाकस्त्री किं नाजमश्रयत् ॥(1.5) 36.

⏑⏑–⏑⏑–⏑–⏑–
⏑⏑––⏑जितोपि मन्मथः .
इममेकशरीरमेव किं
हृदयस्थोपि न वेद शूलि(1.6)[नः] .

············काम इमं राजानं हरस्यैक[शरीरं](1.7)[न वेद]. 37.

तदवश्यमसौ तिलोत्तमा
द्युनदीवावततार भूतलम् .

---

1 See p. 156, note 3. 2 Ms. 'य'.

अचिरादपि पत्युरेकता-
मु(18)[पयाता] ~ इवाहिनीपतेः ॥

तत्ततो हेतोर्गङ्गेव विलोचमा निश्चित भूतलमवतीर्णा सा वा(19)-
[हिनीना से]नाना नदीना च पत्युर्नृपस्य समुद्रस्य चैक्यमुपयाता गन्ता.
याते कर्तरि लुट् ॥                                                    38.

इति बुद्धि(110)बलेन दुस्तरा-
दपि चिन्ताजलधेस्समुद्धृतः.
वदतामिव धर्मनन्दनः
प्रथमस्सत्यवता व्यजिज्ञ(111)पत् ॥

दुस्तरादगाधादपि चिन्तासमुद्रात्पूर्वोक्तबुद्धिबलेनोद्धृतस्स पृथिवीभटो
वदता वाग्मिनामा(112)द्यो व्यजिज्ञपत् यथा सत्यवता युधिष्ठिर आद्य ॥39

त्वयि पार्थिव चित्रपुत्रिका-
चिरसदर्शनबद्धलोच(113)ने.
स्मयमान इवादिपूरुषो
रविरन्तर्गगन विलम्बते ॥

हे राजस्त्वयि चित्रक्रियाश्चिर सदर्श(114)नार्थ कौतुक्वति सति सा-
श्चर्य इव तव पूर्वपुरुषस्सूर्यो मध्येगगन विलम्ब करोति ॥          40.

क्षणमात्रमिना(115)यमर्यमा
तुरगाणा सुरदीर्घिकातटे.
त्यजति व्यपनेतुमुद्यमं
गगनाग्रक्रमणश्रमज्ञमम् ॥(116)

·· ·· श्वाना नभोलङ्घनखेद निवारयितुमिव क्षणमादित्य उद्यम
त्यजति ॥                                                              41.

1 Is ॥ 'ध्रु'.          2 Ms दन्त          3 Ms 'नाद'.          4 Ms 'म्मन्.

नलिनीमभितो(¹ 17) ⏑ — ⏑ —[1]
करसंस्पर्शवशेन भास्वतः .
अवलोक्य निराशयात्मनि
कृशिमानं जननी शनेरगात् ॥

सू.(¹ 18)··················[प]द्मिनीं दृष्ट्वा निराशयाशाभावेनेव शनेस्सौरस्य जननी छाया ह्रस्वत्वं ग(¹ 19)[तवती]·········माशाभावेनेति हेतूत्प्रेक्षणं . तृतीयासप्तम्योर्बहुलमित्ययम् ॥ 42.

शनिमातरि पा(¹ 20) ⏑ — ⏑ —.
⏑ ⏑ — — ⏑ तिमात्रमल्पताम् .
लिखितैरिव चित्रदर्शिनि
त्वयि पृथ्वीपतिभिः(¹.21) [प्रतीद्यते] ॥

·············भिर्नृपसेवकैस्सह शनिमातरि च्छायायामल्पतां मध्याह्नजातं ह्रस्वत्वं(¹.22)·························रिव राजभिश्चित्रं पश्यति त्वयि प्रतीद्यते . मध्याह्ने हि सेवका देवकार्यवशाद्विर(¹.23··82)ले भवन्ति ॥ 43.

इति चित्रगतामराङ्गना-
मुखपेयूषमयूखमण्ड[लात्] .
⏑ ⏑ — ⏑ ⏑ — ⏑ —
⏑ ⏑ — — ⏑ ⏑(¹.1)राज भारती ॥

चित्रलिखिततिलोत्तमामुखचन्द्रमण्डलाद्राजने·········(¹.2) 44.

प्रथमानुचरस्मरेच्छया
प्रतिमोक्तुं नृपसामवायिकान् .

---

1 Is it निश्स्वरी ? 2 Ms. "राल्पमात्व". [3] Ms "नरजनी". र crossed out and "न" is under "ज". 4 Ms. "शमागा". 5 Ms. "शु". 6 Panini 2. 4. 84 7 Is it पार्थिवानुगैः सह यान्त्यामति ? 8 Ms. "त्रडादन". 9 Ms. "तम".

पृथिवीभ[ट एव]–⏑–
⏑⏑–⏑⏑–⏑–⏑– .(l.3)

प्रथमोनुचरो यस्समरस्त्वदिच्छयेव नृपान्त्सांमवायिकांश्च प्रतिमोक्तुं···
·········(l.4)वारयत् यदि राजैतान्प्रत्यमोदयत्तदा काममोहितत्वात्तेषा-
मुचितां प्रतिपत्तिं नाकरिष्यदतो मागध एव प्र(l.5)तिमुक्तवानित्यर्थः ॥ 44.

मनसा सह चक्षुरिन्द्रिये
नृपतेश्चित्रमृगीदृशा हृते ।
विरहान्धतयेव नेन्द्रियैः
परिशि(l.6)ष्टैः प्रसृतं स्वकर्मणि ॥

तिलोत्तमया राज्ञश्चित्ते नेत्रे च हृते सति शेषैः कर्णादिभिरिन्द्रियैस्स्व-
कर्मणि [श्रवणा](l.7)दौ न प्रवृत्तम् । अतस्संभाव्यते विरहेणान्ध्यात् ॥ 45.

अमृणोदमृतस्तुतश्श्रुते-
र्न बहिर्गायत एव [वन्दिनः] ।
[ह](l.8)रिचन्दनवारिणोक्षितं
शिशिरं नावजगाम कुट्टिमम् ॥

श्रुतेः कर्णयोरमृतस्तुतो बहिर्गायतो गायनान्स नैवा·········(l.9)
हरिचन्दनसिक्तां शीतलां भुवं च नाचेतयत् ॥                                    46.

न रदक्षतभाग्यभागिता-
मनयच्चागरखण्डवीटिकाम् ।
घन(l.10)साररसानुसारिणा
न जलार्द्रापवनेन पिप्रिये ॥

---

1 Ms. 'वारत्व'. Cf. p. 5, note 3.   2 Ms. 'तेषे'.   3 Ms. 'मर'.   4 Ms. 'दो'.

स ताम्बूलवीटिकां दशनच्छेदेन भाग्यवत्त्वं नानयत्. न च(111) कर्पूरार्द्रेण जल·········वायुनासावतुष्यत् ॥ 47.

स्थितया सुरसुभ्रुवा मन-
स्युपदिष्टैरिव मन्थरैः पदैः .
त्रि(112)दिवादविशिष्टतस्ततो
निरगाच्चित्रगृहात्कथंचन ॥

चित्ररथयाप्सरसोपदिष्टैरिवालसैः पदैः स्वर्ग(113)सकाशादभिन्नात्तत-श्चित्रगृहात्स निर्गतः ॥ 48.

कृतमाङ्गलिकादिकाह्निकः
प्रतिमुच्य क्षितिपं शनैः शनैः (114) .
तरणेस्तरुणिम्नि तेजसां
शिथिले वन्दिपतिर्विनिर्ययौ ॥

कृतं माङ्गलिकमाह्निकं मागधोचितं कर्म ये(115)न स वन्दी राजानं प्रतिमुच्य सूर्यतेजसि मन्दे सति शनैश्शनैर्निर्गतः ॥ 49.

इयदाधिभराङ्कमुद्वहे-
दधि—(116)पि किमेष मामिति .
उपनीतमपि स्वसेवकैः
पुरतो नाधिरुरोह वाजिनम् ॥

इया[नाधि]भरो यस्य(117) वाह·········दशं मामतिसमर्थोप्येषो-ऽश्वो मां किं कथ··············(118)नीतमपि नारोहत् ॥ 50.

भविता तव पालकं प्रति
ध्रुवधूः केन पथानुरागिणी .

1 Ms. भाग्यत्व.  2 Ms. °स्रो तु°.  3 Ms. स्थित°. Is it भितया ?-
4 Ms. °वधू°.

अवनम्रमुखो मुहुर्मु[हा](l 19)-
निति पृच्छन्पृथिवीमिवागमत् ॥

तथ भोक्तारं राजानं प्रति तिलोत्तमानुरक्ता केनोपायेन भवि[तेती]-(l.20)व भूमिं पृच्छन्नतनुरसस्य गृहं गतवान् ॥ 51.

शतशोपि विकल्पकल्पना-
चतुरे चेतसि या न दि[द्युते](l 21).
उदभावि तया स्फुरत्तया
रभसादक्षिणि तस्य दक्षिणे ॥

शतवारं विकल्पानां कल्पनायां·········(l 22)णे विषये चतुरे तस्य चित्ते या नाद्युतश्चिन्तावशात्तस्य चित्ते जात्वपि नास्फुरदित्यर्थः तया········(l.23)न तस्य दक्षिणनेत्रे सहसा जातम्. स्फुरत्ता प्रतिभा स्पन्दश्च ॥ 52.

स शरीरगुणोस्य कश्चन
⏑ ⏑ — — ⏑ ⏑ [द](l 24)र्शनोत्सवम्.
स्फुरणं स्फुटमेव चक्षुषा
यदवामेन सदानुभूयते. ॥

कश्चन वक्तु············(l.25*)············महता लाभः यतो दक्षिणेन नेत्रेण सदा स्पन्दोनु(l.1)[भूयते]. 53.

⏑ ⏑ — ⏑ ⏑ — ⏑ — ⏑ —
⏑ ⏑ — दर्शनमात्रकं फलम्.
अपरिश्लथमानसज्वरः
प्रभुभक्तेयर्कपरोवि(l.2)[शद्गृहम्].

1 Ms. 'गम्न. 2 Ms. 'न्ना'. 3 Ms. 'ग्नि्न्तु'. 4 Ms. 'ह. 5 Ms. स्तो'. 6 Ms. 'रं'. 7 Ms. 'केम्न्णो'.

·········दर्शनमेव फलं जानन्सोशिथिलचिन्तस्स्वामिभक्तिपरो गृहम(13)विशत् ॥ 54.

अ[चिरेण?] मनोरथः प्रभोः
फलितस्स्यादिति चिन्तयन्नसौ .
प्रथमोपगतेन केनचि-
त्पठितं(14) [श्लोकमिमं तदाशृणोत्?] ॥

राज्ञोभिलाषस्सफलोपि स्यादिति विमृशन्स केनापि नवागतेन पण्डितेनेमं पठि(15)·········शृणोत् ॥ 55.

सलिलादपि निर्ययौ रमा
धरणेरप्युदपादि मैथिली .
दहनादपि याज्ञसे[निका](16)
[किम]लभ्यं पुरुषार्थशालिनाम् ॥

समुद्राल्लक्ष्मीरुदभूत् भूमे·········अग्नेरपि द्रौपदी(17)·········शालिभिः किं न लभ्यते ॥ 56.

समयानुगुणेत्युपश्रुति-
श्श्रुतिपेयूषविलासवापिका .
उपताप(18) ⏑⏑⏑⏑
शिथिलीकर्त्तुमिवोपचक्रमे ॥

श्रुतेः कर्णस्यामृतपूर्णक्रीडापुष्करिणी यतस्तत्कालो(19)चित·······स्तादृशं तापं स्वल्पीकर्त्तुमिव प्रारेभे ॥ 57.

कविपण्डितचक्रमेलकं
प्रणमन्प्राञ्जलिरेप(110) ⏑⏑.

1 Ms. 'नमेफ'. 2 Ms. 'कलु'. 3 Ms. 'मत्म'. 4 Is it मागधः?

उपहूय स पद्मनाभ इ-
त्यवदद्विग्रहराजमन्त्रिणम् ॥

कविपण्डितानां चक्रेण मेलकं(1 11) नमस्ते पद्मनाभ इत्याहूय विग्रह-
राजामात्यमित्यवदत् ॥ 58.

इदमन्यपरं वचो जगौ
कविता कश्च पपा(1 12)ठ चात्र कः.
कतमश्च विपश्चिदेप यो
निविडोष्णीपदुरीच्यकुन्तलः ॥

कः कविरिमं श्लोक कृतवान् कश्चो(1 13)क्तवान् निविडेनोष्णीपेणादृश्य-
[केशाः].. कतम.. काश्मीरप्रक्रि[या] विध्यम् (?) ॥ 59.

तमुवाच स योय(1 14)‿‿
प्रथमे प्रश्नयुगे स एव ते.
यदि सत्यमवैपि मद्वच-
श्चरमं पृष्टमहं ब्रवीमि तत् ॥

योयं विपश्चि(1 15)त्स तव प्रश्नयुगस्योत्तरम्. स एव कविः पा-
ठकश्चेत्यर्थः. यदि मद्वचस्सत्य जानासि तदा कोयं विप(1 16) ....... -
... ॥ 60.

इति वादिनमेन‿‿
‿‿[स] वन्दिनाम्.
क्षणम(1 17)[प्यनृत]‿‿
‿‿[मुखा]म्बुजे ॥

तव मुखपद्मेऽसत्यजलकणाः क्षणमपि न तिष्ठं(1 18)न्तीति पृथिवी-
भटः पद्मनाभमवदत् ॥ 61.

1 Ms नमस्त See above, p 303, note 1  2 Ms 'मधि'.  3 Ms निवि'
4 Ms 'मडु'  5 Ms काय  6 Ms 'ह'

पृथिवीभटमुक्तवन्तमि-
त्यवदन्मानधरो महत्तमः .
मिहिरो(l.19)[न्यगुणप्रकाशने]
परदोषावरणे महत्तमः ॥

स मानी महत्तम एवमुक्तवन्तं पृथिवीभटमित्यवदत्(l 20)·········
प्रकाशने सूर्यः परेषां दोषाच्छादने महानन्धकारः . 62.

विबुधश्च कविश्च शारदा-
य⏑——⏑⏑(l 21)[मण्डला[1]]दयम् .
निगमागमतीर्थतापस-
प्रथमोद्यागतवाङ्[यान]कः ॥

पण्डितः कविश्च तथा नि(l 22)·········[ज]यानकश्च [शारदा]क्षे-
त्रात्कश्मीरमण्डलादागतः ॥ 63.

युगपत्सुमं(l.23)—⏑—⏑—
⏑⏑——⏑रुदेत्यमुष्य धीः .
अमुनैव सुतेन शारदा
गिरिकन्येव गुहेन नन्दति ॥

सुमन(l.24**63) 64.

[Six lines at the beginning of page missing]

शशिखण्डशिखण्डमण्डनं
प्रति निर्वेदनिवेदनं व्यधात् .

············(17)या पूजया हेतुभूतया चन्द्रावचूडाभूषणं हरं प्रति
वन्दी··············· ॥ 65.

1 Ms 'न्दा'. 2 Ms. 'क्षम'.

किल प्रसिद्धौ पुमान्मनुष्य······(l.16)रुपमन्युनामा संपन्नस्तस्य महामुनेर्गुरो················(l.17)रक्षति. हरेणोपमन्यवे यो दत्तः. उपमन्युर्नारायणस्य दी[क्षागुरुरासीत् ?]············ 69.

[उप](l.18)मन्युकुलादपोहितुं
न पटुर्गोत्रपरम्परागतम्.
कलिं⏑⏑⏑⏑⏑⏑
⏑⏑—⏑⏑⏑—⏑—(l.19)धनम् ॥

कुलक्रमागतं शिवभक्तिधनमुपमन्युस················(l 20)स्य सन्ततिक्रमपर्याप्तल·········हरेर्भक्तिसु················(l 21)मेरण प्राप्ततमस्य शिवभक्तिधनस्य··················(l.22)स्यां विरोचनस्सूर्य···················(l 23*) 70.

[Six lines at the beginning of page missing]

···················व निमीलितचक्षु···················(l.7)-····················तोपिता शारदा सूर्योदये··········चितनेत्रस्य दर्शन(l 8)- 71.

⏑⏑—⏑⏑—⏑⏑—⏑—
[चरणसौस्नातिकरत्नन् ]पुरम्.
चरणं च निधा[य]—⏑—
⏑⏑—मि[1]त्रिदिवीकृत(l.9)⏑— .

·········गङ्गाजलं तत्र स्नानेन हेतुना चरणं सुस्नातं पृच्छद्रत्ननूपुरं यस्य(l.10)········· 72.

कवितां पथि पद्धिपे गिरा-
मसि मां पद्भिरुप⏑—⏑—(l.11)

---

1 Ms. °सिधी, 2 Ms. क्रिजि° ? 3 Ms. हरि°. 4 Ms. °मिति°.
5 Ms. °चनुस्नातव°. 6 Ms. °र°.

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – ⏑ ⏑ – – ⏑ – ⏑ नात् ॥

षड्भिर्जन्मभिर्मां सेवित्वा षड्विधे प्राकृतादिष(1 12)............त-
वांस्तां कवितां मनुष्यरूपस्य हरेर्वक्ष्यमाणदशा पृथ्वीरा(1 13)[ज]........
..... त्यर्थः ॥ 73.

पुरुहूतपुराङ्गना पुरा
परिखिन्ना चिरलास्यलीलया (1 14) .
⏑ ⏑ – – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – ⏑ ⏑ – – ⏑ विग्रहा ॥

चिरं नृत्यक्रीडया श्रान्ता तिलोत्तमाप्सरा गङ्गाया(1 15)...... 74.

⏑ ⏑ – – ⏑ कारत्रिन्दिनी-
हठमेलापधियागतं विदन् .
पुलिनात्तृपि(1 16)[ता] ⏑ – ⏑ –
⏑ ⏑ – – ⏑ ⏑ – ⏑ – ⏑ – ॥

पद्मिनी हठेन मेलापे धिया वाञ्छया आगतं चन्द्रं जान(1 17)...
...वनूढवान्. 75.

दलित ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – ⏑ ⏑ – ⏑ (1 18) – ⏑ – .
⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
रमणं पद्मवनस्थितास्मरत् ॥

दलितानां मुक्तानां......(1,19)...............ली तया भयङ्करं
तथाविधं वीक्ष्य पद्मवने वर्तमा(1,20)[ना]...... 76.

---

1 Ms 'वास्ताक'. 2 Ms. 'प्रिनो. Can it be 'मिन्या'? 3 Ms 'न्त्रा'.

⏑⏑–⏑⏑–⏑–⏑–

स्मरणानन्तरमेव दर्शनम्.
यददीयत येन स श्रियो
वश(1.21)—⏑⏑–⏑–⏑–

.........[स्मर]णकाले एव तद्दर्शनं दत्तं येन हेतुना जनेन सह (1.22)................. 77.

⏑⏑–⏑⏑–⏑–⏑–

⏑करं नाकनदीतटस्थितः.
⏑⏑(1.23)–⏑⏑–⏑–⏑–.
⏑⏑––⏑⏑–⏑–⏑– ॥

.........मिव गङ्गायां स्थितः कामो हरि(1.24**84) 78.

* * * * * * * * * * *

1 Copyist's Remark—अत ऊर्ध्वं ग्रन्थः त्रुटितः.